# अनुक्रमणिका.



# सदाचारसमुच्चयः

## श्री वेदानुशासनम्

यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन ॥ ( बृ—उ—४ ब्राह्मणे )

ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपो दमस्तपः शमस्तपो दानं तपो यज्ञं तपो भूर्भुवः स्वर्ब्रह्मैतदुपास्यैतत्तपः ॥

यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति ॥

नमो रुद्राय विष्णवे मृत्युर्मे पाहि ॥

सत्यꣳ परं परꣳ सत्यꣳ सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन सताꣳ हि सत्यं तस्मात्सत्ये रमन्ते तप इति तपो नान-

शनात्परं यद्धि परं तपस्तद्दुर्धर्षं तद्दुराधर्षं तस्मात्तपसि रमन्ते दम इति नियतं ब्रह्मचारिणस्तस्माद्दमे रमन्ते शम इत्यरण्ये मुनयस्तस्माच्छमे रमन्ते दानमिति सर्वाणि भूतानि प्रशꣳसन्ति दानान्नातिदुश्चरं तस्माद्दाने रमन्ते धर्म इति धर्मेण सर्वमिदं परिगृहीतं धर्मान्नातिदुष्करं तस्माद्धर्मे रमन्ते प्रजन इति भूयाꣳसस्तस्माद्भूयिष्ठाः प्रजायन्ते तस्माद्भूयिष्ठाः प्रजनने रमन्तेऽग्नय इत्याह तस्मादग्नय आधातव्या अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमन्ते यज्ञ इति यज्ञो हि देवास्तस्माद्यज्ञे रमन्ते मानसमिति विद्वाꣳसस्तस्माद्विद्वाꣳस एव मानसे रमन्ते न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि पराꣳसि न्यास एवात्यरेचयद्य एवं वेदेत्युपनिषत् ॥

प्राजापत्यो हारुणिः सुपर्णेयः प्रजापतिं पितरमुपससार किं भगवन्तः परमं वदन्तीति तस्मै प्रोवाच सत्येन वायुरावाति सत्येनादित्यो रोचते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदन्ति तपसा देवा देवतामग्र आयन् तपस ऋषयः सुवरन्वविन्दन् तपसा सपत्नान् प्रणुदामारातीस्तपसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्ति दमेन

दान्ताः किल्बिषमवधून्वन्ति दमेन ब्रह्मचारिणः सुवरगच्छन् दमो भूतानां दुराधर्षं दमे सर्वं प्रतिष्ठितं तस्माद्दमः परमं वदन्ति शमेन शान्ताः शिवमाचरन्ति शमेन नाकं मुनयोऽन्वविन्दञ्छमो भूतानां दुराधर्षं शमे सर्वं प्रतिष्ठितं तस्माच्छमः परमं वदन्ति दानं यज्ञानां वरूथं दक्षिणा लोके दातारꣳ सर्वभूतान्युपजीवन्ति दानेनारातीरपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति प्रजननं वै प्रतिष्ठा लोके साधु प्रजायास्तन्तुं तन्वानः पितृणामनृणो भवति तदेव तस्या अनृणं तस्मात्प्रजननं परमं वदन्त्यग्नयो वै त्रयी विद्या देवयानः पन्था गार्हपत्यं ऋक्पृथिवी रथन्तरमन्वाहार्यपचनं यजुरन्तरिक्षं वामदेव्यमाहवनीयः साम सुवर्गो लोको बृहत्तस्मादग्नीन् परमं वदन्त्यग्निहोत्रꣳसायं प्रातर्गृहाणां निष्कृतिः स्विष्टꣳ सुहुतं यज्ञ क्रतूनां प्रायणꣳ सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति यज्ञ इति यज्ञेन हि देवा दिवंगता यज्ञेनासुरानपानुदन्त यज्ञेन द्विषन्तो मित्राभवन्ति यज्ञे सर्वं प्रतिष्ठितं तस्माद्यज्ञं परमं

वदन्ति मानसं वै प्राजापत्यं पवित्रं मानसे न मनसा साधु पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं प्रतिष्ठितं तस्मान्मानसं परमं वदन्ति न्यास इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्मा विश्वः कतमः स्वयंभूः प्रजापतिः संवत्सर इति संवत्सरोऽसावादित्यो य एषः आदित्ये पुरुषः स परमेष्ठी ब्रह्मात्मा याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति पर्जन्येनौषधिवनस्पतयः प्रजायन्त ओषधिवनस्पतिभिरन्नं भवत्यन्नेन प्राणाः प्राणैर्बलं बलेन तपस्तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिः शान्त्या चित्तं चित्तेन स्मृतिः स्मृत्या स्मार ँ स्मारेण विज्ञानं विज्ञाना दानन्दो ब्रह्मयोनिः स वा एष पुरुषः पञ्च धा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशश्च सर्वैः सर्वमिदं जगत्समभूत ँ सभव्यं जिज्ञासक्लृप्तऋतजारयिष्ठा श्रद्धा सत्यो महस्वान्तपसो वरिष्ठा ज्ञात्वातमेवं मनसा हृदा च भूयो न मृत्युमुपयाति विद्वान् तस्मान्न्यासमेषां तपसामतिरिक्तमाहुर्वसुरण्वो विभूरसि प्राणे त्वमसि संधाता ब्रह्मन् त्वमसि विश्वधृत्तेजोदास्त्वमस्यग्निरसि वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमस उपयामगृही-

तोऽसि ब्रह्मणे त्वामहस ओमित्यात्मानं युञ्जीतैतद्वै महोपनि-
षदं देवानां गुह्यं य एवं वेद ब्रह्मणो महिमानमाप्नोति तस्मा-
द्ब्रह्मणो महिमानमित्युपनिषत् ॥ ( ना. उ. )

वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।
वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुम ॥ १ ॥

( भा. सं. ६. अ. १ )

धर्मं तु साक्षाद्भगवत्प्रणीतं न वै विदुर्ऋषयो नापि देवाः ।
न सिद्धमुख्या असुरा मनुष्याः कुतश्च विद्याधरचारणादयः ॥२॥
स्वयंभूर्नारदः शंभुः कुमारः कपिलो मनुः ।
प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥ ३ ॥
द्वादशैते विजानीमो धर्मं भागवतं भटाः ।
गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वामृतमश्नुते ॥ ४ ॥
एतावानेव लोकेऽस्मिन्पुंसां धर्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥५॥

( भा. सं. ६. अ. ३ )

धर्ममूलं हि भगवान्सर्ववेदमयो हरिः ।
स्मृतं च तद्विदां राजन्येन चात्मा प्रसीदति ॥ ६ ॥

( भा. सं. ७. अ. १ )

सत्यं दया तपः शौचं तितिक्षेक्षा शमोदमः।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवं ॥ ७ ॥
संतोषः समदृक्सेवा ग्राम्येहोपरमः शनैः।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥ ८ ॥
अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः।
तेष्वात्मदेवताबुद्धिः सुतरां नृप पाण्डव ॥ ९ ॥
श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः।
सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ॥ १० ॥
नृणामयं परो धर्मः सर्वेषां समुदाहृतः।
त्रिंशल्लक्षणवान्राजन्सर्वात्मा येन तुष्यति ॥ ११ ॥

# शिष्टाचारः।

(श्री महाभा. वनप. ३ अ. २०६)

यज्ञो दानं तपो वेदाः सत्यं च द्विजसत्तम्।
पंचैतानि पवित्राणि शिष्टाचारेषु नित्यदा ॥ ६२ ॥
कामक्रोधौ वशे कृत्वा दंभं लोभमनार्जवं।
धर्ममित्येव संतुष्टास्ते शिष्टाः शिष्टसंमताः ॥ ६३ ॥
न तेषां विद्यते वृत्तं यज्ञ स्वाध्यायशीलिनां।
आचारपालनं चैव द्वितीयं शिष्टलक्षणं ॥ ६४ ॥

गुरुशुश्रूषणं सत्यमक्रोधो दानमेव च ।
एतच्चतुष्टयं ब्रह्मन् शिष्टाचारेषु नित्यदा ॥ ६५ ॥
शिष्टाचारे मनः कृत्वा प्रतिष्ठाप्य च सर्वशः ।
यामयं लभते वृत्तिं सा न शक्याह्यतोऽन्यथा ॥ ६६ ॥
वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषत्त्यागः शिष्टाचारेषु नित्यदा ॥ ६७ ॥
ये तु धर्मानसूयंते बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषामनुयाता च पीड्यते ॥ ६८ ॥
ये तु शिष्टाः सुनियताः श्रुतित्यागपरायणाः ।
धर्मं पंथानमारूढाः सत्यधर्मपरायणाः ॥ ६९ ॥
नियच्छंति परां बुद्धिं शिष्टाचारान्विता जनाः ।
उपाध्यायमतेयुक्ताः स्थित्या धर्मार्थदर्शिनः ॥ ७० ॥
नास्तिकान्भिन्नमर्यादान् क्रूरान् पापमतौ स्थितान् ।
त्यजतान् ज्ञानमाश्रित्य धार्मिकानुपसेव्य च ॥ ७१ ॥
कामलोभग्रहाकीर्णां पंचेंद्रियजलां नदीं ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर ॥ ७२ ॥
क्रमेण संचितो धर्मो बुद्धियोगमयो महान् ।
शिष्टाचारे भवेत्साधुः रागः शुक्लेव वाससि ॥ ७३ ॥

अहिंसा सत्यवचनं सर्वभूतहितं परं ।
अहिंसा परमो धर्मः स च सत्ये प्रतिष्ठितः ।
सत्ये कृत्वा प्रतिष्ठां तु प्रवर्तंते प्रवृत्तयः ॥ ७४ ॥
सत्यमेव गरीयस्तु शिष्टाचारनिषेवितं ।
आचारश्च सतां धर्मः संतश्चाचारलक्षणाः ॥ ७५ ॥
यो यथा प्रकृतिर्जंतुः स स्वां प्रकृतिमश्नुते ।
पापात्मा क्रोधकामादीन्दोषानाप्नोत्यनात्मवान् ॥ ७६ ॥
आरंभो न्याययुक्तो यः स हि धर्म इति स्मृतः ।
अनाचारस्त्वधर्मेति एतच्छिष्टानुशासनं ॥ ७७ ॥
अक्रुद्ध्यंतोऽनसूयंतो निरहंकारमत्सराः ।
ऋजवः शमसंपन्नाः शिष्टाचारा भवंति ते ॥ ७८ ॥
त्रैविद्यवृद्धाः शुचयो वृत्तवंतो मनस्विनः ।
गुरुशुश्रूषवो दांताः शिष्टाचारा भवंत्युत ॥ ७९ ॥
तेषामहीनसत्वानां दुष्कराचारकर्मणां ।
स्वैः कर्मभिः सत्कृतानां घोरत्वं संप्रणश्यति ॥ ८० ॥
तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवं ।
धर्मं धर्मेण पश्यंतः स्वर्गं यांति मनीषिणः ॥ ८१ ॥
आस्तिका मानहीनाश्च द्विजातिजनपूजकाः ।

श्रुतवृत्तोपसंपन्नाः संतः स्वर्गनिवासिनः ॥ ८२ ॥
वेदोक्तः परमो धर्मो धर्मशास्त्रेषु चापरः ।
शिष्टाचारश्च शिष्टानां त्रिविधं धर्मलक्षणं ।
पारणं चापि विद्यानां तीर्थानामवगाहनं ॥ ८३ ॥
क्षमा सत्यार्जवं शौचं सतामाचारदर्शनं ।
सर्वभूतदयावंतो अहिंसा निरताः सदा ॥ ८४ ॥
परुषं च न भाषंते सदा संतो द्विजप्रियाः ।
शुभानामशुभानां च कर्मणां फलसंचये ॥ ८५ ॥
विपाकमभिजानंति ते शिष्टाः शिष्टसंमताः ।
न्यायोपेता गुणोपेताः सर्वलोकहितैषिणः ॥ ८६ ॥
संतः स्वर्गजितः शुक्लाः सन्निविष्टाश्च सत्पथे ।
दातारः संविभक्तारो दीनानुग्रहकारीणः ॥ ८७ ॥
सर्वपूज्या श्रुतधनास्तथैव च तपस्विनः ।
सर्वभूतदयावंतस्ते शिष्टा शिष्टसंमताः ॥ ८८ ॥
दीनशिष्टाः सुखाँल्लोकानाप्नुवंतीह च श्रियं ।
पीडया च कलत्रस्य भृत्यानां च समाहिताः ॥ ८९ ॥
अतिशक्त्या प्रयच्छंति संतः सद्भिः समागताः ।
लोकयात्रां च पश्यंतो धर्ममात्महितानि च ॥ ९० ॥

एवं संतो वर्तमानास्त्वेधंते शाश्वतीः समाः ।
अहिंसा सत्यवचनमानृशंस्यमथाऽऽर्जवं ॥ ९१ ॥
अद्रोहोनाभिमानश्च ह्रीस्तितीक्षा दमः शमः ।
धीमंतो धृतिमंतश्च भूतानामनुकंपकाः ॥ ९२ ॥
अकामद्वेषसंयुक्तास्ते संतो लोकसाक्षिणः ।
त्रीण्येवतु सतामाहुः संतः पदमनुत्तमं ॥ ९३ ॥
न चैव द्रुह्येद्द्याच्च सत्यं चैव सदा वदेत ।
सर्वत्र च दयावंतः संतः करुणवेदिनः ॥ ९४ ॥
गच्छंतीह सुसंतुष्टा धर्मपंथानमुत्तमं ।
शिष्टाचारा महात्मानो येषां धर्मः सुनिश्चितः ॥ ९५ ॥
अनसूया क्षमा शांतिः संतोषः प्रियवादिता ।
कामक्रोधः परित्यागः शिष्टाचारनिषेवनं ॥ ९६ ॥
कर्म च श्रुतसंपन्नं सतां मार्गमनुत्तमं ।
शिष्टाचारं निषेवंते नित्यं धर्मनुव्रताः ॥ ९७ ॥
प्रज्ञाप्रासादमारुह्य मुच्यंते महतो भयात् ।
प्रेक्षंतो लोकवृत्तानि विविधानि द्विजोत्तम ॥ ९८ ॥



# ब्राह्मणलक्षणम्।

( श्री महाभा. वनप. ३. अ. २०६ )

यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः।
यो वदेदिह सत्यानि गुरुं संतोषयेत च।
हिंसितश्च न हिंसेत तं देवा ब्राह्मणं विदुः॥ ३३॥
जितेंद्रियो धर्मपरः स्वाध्यायनिरतः शुचिः।
कामक्रोधौ वशौ यस्य तं देवा ब्राह्मणं विदुः॥ ३४॥
यस्य चात्मसमो लोको धर्मज्ञस्य मनस्विनः।
सर्वधर्मेषु च रतस्तं देवा ब्राह्मणं विदुः॥ ३५॥
योऽध्यापयेदधीयीत यजेद्वा याजयीत वा।
दद्याद्वाऽपि यथाशक्ति तं देवा ब्राह्मणं विदुः॥ ३६॥
ब्रह्मचारिवदान्यो योऽप्यधीयाद्द्विजपुंगवः।
स्वाध्यायवानमत्तो वै तं देवा ब्राह्मणं विदुः॥ ३७॥
यद्ब्राह्मणानां कुशलं तदेषां परिकीर्तयेत्।
सत्यं तथा व्याहरतां नानृते रमते मनः॥ ३८॥
धर्मं तु ब्राह्मणस्याहुः स्वाध्यायं दममार्जवं।
इंद्रियाणां निग्रहं च शाश्वतं द्विजसत्तम॥ ३९॥
सत्यार्जवे धर्ममाहुः परं धर्मविदो जनाः।

दुर्ज्ञेयः शाश्वतो धर्मः स च सत्ये प्रतिष्ठितः ॥ ४० ॥
श्रुतिप्रमाणोधर्मःस्यादितिवृद्धानुशासनं ॥ ४१ ॥

# प्रकीर्णम् ।

पूर्वरात्रे परे चैव युञ्जानः सततं मनः ।
लघ्वाहारो विशुद्धात्मा पश्यन्नात्मानमात्मनि ॥ १ ॥
प्रदीप्तेनैव दीपेन मनो दीपेन पश्यति ।
दृष्ट्वाऽऽत्मानं निरात्मानं स तदा विप्रमुच्यते ॥ २ ॥
सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः ।
एतत्पवित्रं लोकानां तपो वै संक्रमो मतः ॥ ३ ॥
नित्यं क्रोधात्तपो रक्षेद्धर्मं रक्षेच्च मत्सरात् ।
विद्यांमानापमानाभ्यामात्मानं तु प्रमादतः ॥ ४ ॥
आनृशंस्यं परो धर्मः क्षमा च परमं बलं ।
आत्मज्ञानं परं ज्ञानं सत्यं व्रतं परं व्रतं ॥ ५ ॥
सत्यस्य वचनं श्रेयः सत्यं ज्ञानं हितं भवेत् ।
यद्भूतहितमत्यंतं तद्वै सत्यं परं मतं ॥ ६ ॥
न हिंस्यात्सर्वभूतानि मैत्रायणगतश्चरेत् ।
नेदं जीवितमासाद्य वैरं कुर्वीत केनचित् ॥ ७ ॥
आकिंचन्यं सुसंतोषो निराशित्वमचापलं ।

एतदेव परं ज्ञानं सदाऽऽत्मज्ञानमुत्तमं ॥ ८ ॥
इंद्रियाणां प्रसादेन तदेतत्परिवर्जयेत् ।
तस्मादनशनं दिव्यं निरुद्धेंद्रियगोचरं ॥ ९ ॥
तपसा स्वर्गगमनं भोगोदानेन जायते ।
ज्ञानेन मोक्षो विज्ञेयस्तीर्थस्नानादघक्षयः ॥ १० ॥
अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकास्त्रयस्ते न भवंति दत्ता यः कांचनं गाश्च महीं च दद्यात् ॥ ११ ॥
असतां दर्शनात्स्पर्शात्संजल्पाच्च सहासनात् ।
धर्माचाराः प्रहीयंते सिद्ध्यंति च न मानवाः ॥ १२ ॥
बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् ।
मध्यमैर्मध्यतां याति श्रेष्ठतां याति चोत्तमैः ॥ १३ ॥
शोकस्थानसहस्राणि भयस्थानशतानि च।
दिवसे दिवसे मूढमाविशंति न पंडितं ॥ १४ ॥
धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता ।
प्रक्षालनाद्धि पंकस्य श्रेयो न स्पर्शनं नृणां ॥ १५ ॥
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेता निगेहेषु नोच्छिद्यंते कदाचन ॥ १६ ॥
देयमार्गस्य शयनं स्थितश्रांतस्य चासनं।

तृषितस्य च पानीयं क्षुधितस्य च भोजनं ॥ १७ ॥
चक्षुर्दद्यान्मनोदद्याद्वाचं दद्यात्सुभाषितां ।
उत्थाय चासनं दद्यादेष धर्मः सनातनः । १८ ॥
इज्याध्ययनदानानि तपः सत्यं क्षमा दमः ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ १९ ॥
अत्र पूर्वश्चतुर्वर्गः पितृयाणपथे स्थितः ।
कर्तव्यमिति यत्कार्यं नाभिमानात् समाचरेत् ॥ २० ॥
उत्तरो देवयानस्तु सद्भिराचरितः सदा ।
अष्टांगे नैव मार्गेण विशुद्धात्मा समाचरेत् ॥ २१ ॥
क्षंतव्यमेव सततं पुरुषेण विजानता ।
यदा हि क्षमते सर्वं ब्रह्मसंपद्यते तदा ॥ २२ ॥
एतदात्मवतां वृत्तमेष धर्मः सनातनः ।
क्षमाचैवानृशंस्यं च तत्कर्त्ताऽस्म्यहमंजसा ॥ २३ ॥

# मद्यनिषेधः ।

( श्री भारत आदिपर्वणि—अ—७६ श्लोक )

समन्युरुत्थाय महानुभावस्तदोशना विप्रहितं चिकीर्षुः ।
सुरापानं प्रतिसंजातमन्युः काव्यः स्वयं वाक्य मिदं जगाद ॥६६॥
यो ब्राह्मणोऽद्यप्रभृतीह कश्चिन्मोहात्सुरां पास्यति मंदबुद्धिः ।

अपेतधर्मा ब्रह्महा चैव स स्यादस्मिँल्लोके गर्हितः स्यात्परे च॥६७॥
मयाचैतां विप्रधर्मोक्तिसीमां मर्यादां वै स्थापितां सर्वलोके।
संतो विप्राःशुश्रुवांसो गुरूणां देवालोकाश्चोपशृण्वंतु सर्वे ॥६८॥

# तृष्णास्वरूपम्।

(भा. आ. प. अ. ८५)

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषाकृष्णवर्त्मेव भूयएवाभिवर्धते ॥ १२ ॥
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
एतस्यापि न पर्याप्तं तस्मात्तृष्णां परित्यजेत् ॥ १३ ॥
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः।
योऽसौ प्राणांतिको रोगस्तां तृष्णां त्यजतः सुखं ॥ १४ ॥

# पापकर्मफलारंभः।

(भा. आ. अ. १०८)

बालो हि द्वादशाद्वर्षाज्जन्मतो यत्करिष्यति।
न भविष्यत्यधर्मोऽत्र न प्रज्ञास्यंति वै दिशः ॥ १५ ॥
मर्यादां स्थापयाम्यद्य लोके धर्मफलोदयां ॥ १६ ॥

आचतुर्दशकाद्वर्षान्न भविष्यति पातकं
परतः कुर्वतामेव दोष एव भविष्यति ॥ १७ ॥

# कायिकादिपापानि ॥

( मनुसंहितायां अ. १२ )

परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥ १ ॥
पारुष्यमनृतं चैव पैशून्यं चापि सर्वशः ।
असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ २॥
अदत्तानामुपादानं हिंसा चैवा विधानतः ।
परदारोपसेवा च शारीरं त्रिविधं स्मृतम् ॥ ३ ॥
मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम् ।
वाचा वाचाकृतं कर्म कायेनैव च कायिकम् ॥ ४ ॥
[ त्रिविधं च शरीरेण वाचा चैव चतुर्विधम् ।
मनसा त्रिविधं कर्म दशाधर्मपथांस्त्यजेत् ॥ ]
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥ ९ ॥
[ शुभैः प्रयोगैर्देवत्वं व्यामिश्रैर्मानुषोभवेत् ।
अशुभैः केवलैश्चैव तिर्यग्योनिषु जायते ॥ ]

# वृथादानानि।

मार्कंडेय उवाच॥

वृथा जन्मानि चत्वारि वृथा दानानि षोडश॥
वृथा जन्मह्यपुत्रस्य ये च धर्मबहिष्कृताः॥ १॥
परपाकेषु येऽश्नंति आत्मार्थं च पचेत्तु यः।
पर्यश्नंति वृथा यत्र तदसत्यं प्रकीर्त्यंते॥ २॥
आरूढपतिते दत्तमन्यायोपहृतं च यत्।
व्यर्थं तु पतिते दानं ब्राह्मणे तस्करे तथा।
गुरौ चानृतिके पापे कृतघ्ने ग्रामयाजके।
वेदविक्रयिणे दत्तं तथा वृषलयाजके॥ ३॥
ब्रह्मबंधुषु यद्दत्तं यद्दत्तं वृषलीपतौ।
स्त्रीजनेषु च यद्दत्तं व्यालग्राहे तथैव च॥ ४॥
परिचारकेषु यद्दत्तं वृथादानानि षोडश।
तमोवृत्तस्तु यो दद्याद्भयात्क्रोधात्तथैव च॥ ५॥
भुंक्ते च दानं तत्सर्वं गर्भस्थस्तु नरः सदा।
ददद्दानं द्विजातिभ्यो वृद्धभावेन मानवः॥ ६॥
येषां तटाकानि महोदकानि वाप्यश्चकूपाश्च प्रतिश्रयाश्च।

अन्नस्य दानं मधुरा च वाणी यमस्य ते निर्वचना भवंति ॥७॥
अन्नदाः प्रथमं यांति सत्यवाक्तदनंतरं ।
अयाचितप्रदाता च समं यांति त्रयो जनाः॥ ८ ॥
षडशीतिसहस्राणि योजनानां नराधिप ।
यमलोकस्य चाध्वानमंतरं मानुषस्य च ॥ ९ ॥
द्विजपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत्पुष्करपर्णेन पिबंति पितरो जलं ॥ १ ॥
स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः ।
पितरः पादशौचेन अन्नाद्येन प्रजापतिः ॥ २ ॥
जप्यैर्मंत्रैश्चहोमैश्च स्वाध्यायाध्ययनेन च ।
नावं वेदमयीं कृत्वा तारयंति तरंति च ॥ ३ ॥
ब्राह्मणांस्तोषयेद्यस्तु तुष्यंते तस्य देवताः ।
वचनाच्चापि विप्राणां स्वर्गलोकमवाप्नुयात् ॥ ४ ॥
अंर्तजानुशयोयस्तु भुंजते सक्तभाजनः ।
यो द्विजः शब्दरहितं स क्षमस्तारणाय वै ॥ ५ ॥
अपानपानगदितास्तथाऽन्ये ये द्विजातयः ।
जपंति संहितां सम्यक्ते नित्यं तारणक्षमाः ॥ ६ ॥
हव्यं कव्यं च यत्किंचित्सर्वं तच्छ्रोत्रियोऽर्हति ।

दत्तं हि श्रोत्रिये साधौ ज्वलितेऽग्नौ यथाहुतं ॥ ७ ॥
मन्युप्रहरणाविप्रा न विप्राःशस्त्रयोधिनः ।
निहन्युर्मन्युना विप्रा वज्रपाणिरिवासुरान् ॥ ८ ॥
वाक्शौचं कर्मशौचं च यच्च शौचं जलात्मकं ।
त्रिभिः शौचैरुपेतो यः स स्वर्गी नात्र संशयः ॥ ९ ॥
सायंप्रातश्च संध्यां यो ब्राह्मणोऽभ्युपसेवते ।
प्रजपन्पावनींदेवीं गायत्रीं वेदमातरं ॥ १० ॥
स तया पावितो देव्या ब्राह्मणो नष्टकिल्बिषः ।
न सीदेत्प्रतिगृण्हानो महीमपि स सागरां ॥ ११ ॥
रक्षितारं च राजानं ब्राह्मणं च तपस्विनं ।
अभिगम्याभिपूज्याथ सद्यः पापात्प्रमुच्यते ॥ १२ ॥
पुण्यतीर्थाभिषेकं च पवित्राणां च कीर्तनं ।
सद्भिः संभाषणं चैव प्रशस्तं कीर्त्यते बुधैः ॥ १३ ॥
साधुसंगमपूतेन वाक्सुभाषितवारिणा ।
पवित्रीकृतमात्मानं संतो मन्यंति नित्यशः ॥ १४ ॥
ये पापानि न कुर्वंति मनोवाक्कर्मबुद्धिभिः ।
ते तपंति महात्मानो न शरीरस्य शोषणं ॥ १५ ॥



# धर्मस्वरूपम् ।

कृते प्रवर्तते धर्मश्चतुष्पातजनैर्धृतः ।
सत्यं दया तपो दानमितिपादाविभोर्नृप ॥ १२ ॥

(भा. सं. १२)

त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति ॥ (छां. उ.)

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
ह्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ (ना. प. उ.)

तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्ददद इति दाम्यते दत्त दयध्वमिति तदेतत्त्रयꣳशिक्षेद्दमं दानं दयामिति-

(बृ. उ.)

धर्म उवाच ॥

यशः सत्यं दमः शौचमार्जवं ह्रीरचापलं ।
दानं तपो ब्रह्मचर्यमित्येतास्तनवो मम ॥ ७ ॥

अहिंसा समता शांतिस्तपः शौचममत्सरः ।
द्वाराण्येतानि मे विद्धि प्रियोह्यसि सदा मम ॥ ८ ॥

( भागवते ).

## धर्मपत्नयश्च तासां प्रजाः।

श्रद्धा मैत्री दया शान्तिस्तुष्टिः पुष्टिः क्रियोन्नतिः ।
बुद्धिर्मेधा तितिक्षा ह्रीर्मूर्तिर्धर्मस्य पत्नयः ॥
श्रद्धा सूतशुभं मैत्री प्रसादमभयं दया ।
शांतिः सुखं मुदं तुष्टिः स्मयं पुष्टिरसूयत ।
योगं क्रियोन्नतिर्दर्पमर्थं बुद्धिरसूयत ॥
मेधास्मृतिं तितिक्षा तु क्षेमं ह्रीः प्रश्रयं सुतम् ।
मूर्तिः सर्वगुणोत्पत्तिर्नरनारायणावृषी ॥

# अधर्मस्वरुपम् ।

( भागवते )

मृषाऽधर्मस्य भार्यासीद्दम्भं मायां च शत्रुहन् ।
असूत मिथुनं तत्तु निर्ऋतिर्जगृहेऽप्रजः ॥
तयोः समभवल्लोभो निकृतिश्च महामते ।
ताभ्यां क्रोधश्च हिंसा च यद्दुरुक्तिः स्वसा कलिः ॥
दुरुक्तौ कलिराधत्त भयं मृत्युं च सत्तम ।
तयोश्च मिथुनं जज्ञे यातना निरयस्तथा ॥
संग्रहेण मयाख्यातः प्रतिसर्गस्तवानघ ।
त्रिः श्रुत्वैतत्पुमान्पुण्यं विधुनोत्यात्मनो मलम् ॥
विधर्मः परधर्मश्च आभास उपमा छलः ।
अधर्मशाखा पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेत् ॥
धर्मबाधो विधर्मः स्यात्परधर्मोऽन्यचोदितः ।
उपधर्मस्तु पाखण्डो दम्भो वा शब्दभिच्छलः ॥
यस्त्विच्छया कृतः पुम्भिराभासो ह्याश्रमात्पृथक् ।
स्वभावविहितो धर्मः कस्य नेष्टः प्रशान्तये ॥

# त्याज्यदोषाः।

द्वाराणि सम्यक् प्रवदंति संतो बहुप्रकाराणि दुराचराणि।
सत्यार्जवे ह्रीर्दमशौचविद्याः षण्मानमोहप्रतिबंधकानि ॥ १ ॥
क्रोधादयो द्वादश यस्य दोषास्तथा नृशंसानि च सप्त राजन्।
ज्ञानादयो द्वादश चाततानाः शास्त्रे गुणा ये विदिता द्विजानां ॥२॥
क्रोधः कामो लोभमोहौ विवित्साऽकृपाऽसूया मानशोकौ स्पृहा च।
ईर्ष्या जुगुप्सा च महागुणेन सदा वर्ज्या द्वादशैते नरेण ॥३॥
एकैकमेते राजेंद्र मनुष्यं पर्युपासते।
लिप्समानोंतरं तेषां मृगाणामिव लुब्धकः ॥४॥

संभोगसंविद्विषमेधमानो दत्तानुतापी कृपणोऽबलीयान्।
वर्गप्रशंसी वनितां च द्वेष्टा एतेऽपरे सप्त नृशंसरूपाः ५॥
ज्ञानं च सत्यं च दमः श्रुतं च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया।
यज्ञश्च दानं च धृतिः शमश्च महाव्रता द्वादश ब्राह्मणस्य ॥६॥
यस्त्वेतेभ्योऽप्रसवेत् द्वादशेभ्यः सर्वामिमां पृथिवीं संप्रशिष्यात्।
त्रिभिर्द्वाभ्यामेकतो वा विमुक्ताः क्रमाद्विमुक्ता मौनभूता भवंति ॥७॥
दमोष्टादश दोषः स्यात् प्रातिकूल्यं कृते भवेत्।
अनृतं पैशुनं तृष्णा प्रातिकूल्यं तमो रतिः ॥ ८ ॥

लोके द्वेषोऽभिमानश्च विषादः प्राणिपीडनं।
परिवादोऽतिवादः स्यात्परितापोऽक्षमाऽधृतिः ॥ ९ ॥
असिद्धिः पापकृत्यं च हिंसा चेति प्रकीर्त्तिताः।
एतैर्दोषैर्विमुक्तो यः स दमः सद्भिरुच्यते ॥ १० ॥
मदोऽष्टादश दोषः स्यात्त्यागो भवति षड्विधः।
विपर्ययाः स्मृता एते मददोषा उदाहृताः ॥ ११ ॥
श्रेयांस्तु षड्विधस्त्यागस्तृतीयो दुष्करो भवेत्।
तेन दुःखं तरंत्येव भिन्नं तस्मिन् जितं कृते ॥ १२ ॥
अर्हते याचमानाय पुत्रान्वित्तं ददाति यत्।
इष्टापूर्तं द्वितीयं स्यान्नित्यं वैराग्ययोगतः ॥ १३ ॥
कामस्त्यागश्च राजेंद्र स तृतीय इति स्मृतः।
अप्रमादी भवेदेतैः स चाप्यष्टगुणो महान् ॥ १४ ॥
सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च।
अस्तेयं ब्रह्मचर्यं च तथाऽसंग्रहमेव च ॥ १५ ॥
एवं दोषा दमस्योक्तास्तान्दोषान्परिवर्जयेत्।
दोषत्यागोऽप्रमादः स्यात्स चाप्यष्टगुणो मतः ॥ १६ ॥
सत्यात्मा भव राजेंद्र सत्ये लोकाः प्रतिष्ठिताः।
तांस्तु सत्यमुखानाहुः सत्येह्यमृतमाहितं ॥ १७ ॥

निवृत्तेनैवदोषेण तपोव्रतमिहाचरेत् ।
एतद्धातृकृतं वृत्तं सत्यमेव सतां व्रतं ॥ १८ ॥
दोषैरेतैर्विमुक्तं तु गुणैरेतैः समन्वितं ।
एतत्समृद्धमप्यृद्धं तपो भवति केवलं ॥ १९ ॥
यन्मां पृच्छसि राजेंद्र संक्षेपात्मब्रवीमि ते ।
एतत्पापहरं शुद्धं जन्ममृत्युजरापहं ॥ २० ॥
इंद्रियेभ्यश्च पंचभ्यो मनसश्चैव भारत ।
अतीतानागतेभ्यश्च मुक्तश्चेत्स सुखी भवेत् ॥ २१ ॥

# सप्तव्यसनानि ।

वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ।
स्मृतं व्यसनतत्त्वज्ञैः क्रोधजं व्यसनत्रयम् ॥ १ ॥
कामजं मृगया द्यूतं स्त्रियः पानं तथैव च ।
व्यसनं व्यसनार्थज्ञैश्चतुर्विधमुदाहृतम् ॥ २ ॥
अकस्मादेव यः कोपादभीक्ष्णं बहु भाषते ।
तस्मादुद्विजते लोकः सस्फुलिंगादिवानलात् ॥ ३ ॥

नो द्वेजयेज्जगद्वाचा रूक्षया प्रियवाग्भवेत् ।
प्रायेण प्रियकर्मा यः कृपणोऽपि हि सेव्यते ॥ ४ ॥
उद्वेजयति भूतानि दण्डपारुष्यवान्नृपः ।
भूतान्युद्वेजमानानि द्विषतां यान्ति संश्रयम् ॥ ५ ॥
दूष्यस्यादूषणार्थं च परित्यागो महीयसः ।
अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते ॥ ६ ॥
दवाग्निधूमसंरोधो दिङ्मोहो भ्रमणानि च ।
इत्यादि पृथिवीन्द्राणां मृगया व्यसनं स्मृतम् ॥ ७ ॥
जितश्रमत्वं व्यायाम आममेदकफक्षयः ।
चरस्थिरेषु लक्ष्येषु बाणसिद्धिरनुत्तमा ॥ ८ ॥
मृगयायां गुणानेतानाहुरन्येन तत्क्षमम् ।
दोषाः प्राणहराः प्रायस्तस्मात्तद् व्यसनं महत् ॥ ९ ॥
लोभो धर्मक्रियालोपः कर्मणामप्रवर्तनम् ।
सत्यमागमविच्छित्तिरसद्भिः सहवर्तनम् ॥ १० ॥
अर्थनाशक्रियाऽवश्यं नित्यं वैरानुबन्धिता ।
सत्यप्यर्थे निराशत्वमसत्यपि च रागिता ॥ ११ ॥
स्नानादिगात्रसंस्कारपरिभोगेष्वनादरः ।
अव्यायामोऽङ्गदौर्बल्यं शास्त्रार्थप्रत्यवेक्षणम् ॥ १२ ॥

गूहनं मूत्रशकृतोः क्षुत्पिपासोपपीडनम् ।
इत्यादींस्तत्र निपुणा द्यूतदोषान् प्रचक्षते ॥ १३ ॥
पाण्डवो धर्मराजस्तु लोकपाल इवापरः ।
द्यूतेन ह्यसता विद्वान् कलत्राण्यपि हारितः ॥ १४ ॥
नलश्च राजा द्यूतेन हृते राज्यमहोदये ।
धर्मदारान् वने त्यक्त्वा परकर्माकरोत्प्रभुः ॥ १५ ॥
स्त्रीमुखालोकनतया व्यग्राणामल्पचेतसाम् ।
ईहितानि हि गच्छन्ति यौवनेन सह क्षयम् ॥ १६ ॥
गमनं विह्वलत्वं च संज्ञानाशो विवस्त्रता ।
असम्बन्धप्रलापित्वमकस्माद्व्यसनं मुहुः ॥ १७ ॥
प्राणग्लानिः सुहृन्नाशः प्रज्ञाश्रुतिमतिभ्रमः ।
सद्भिर्वियोगोऽसद्भिश्च संगोऽनर्थेन संगमः ॥ १८ ॥
स्खलनं वेपथुस्तन्द्रा नितान्तस्त्रीनिषेवणम् ।
इत्यादिपानव्यसनमत्यन्तं सद्भिर्गर्हितम् ॥ १९ ॥
श्रुतशीलबलोपेताः पानदोषेण भूयसा ।
क्षयमक्षीणनामानो जग्मुरन्धकवृष्णयः ॥ २० ॥
योगीश्वरश्च भगवान्भार्गवो भृगुतुल्यधीः ।
शुक्रः पानमदात्तीव्राद्बुभुजे शिष्यमौरसम् ॥ २१ ॥

वीरश्चाश्वमुपादाय पितृयज्ञमथाव्रजत् ।
तदवद्यं हरेरूपं जगृहुर्ज्ञानदुर्बलाः ॥
यानि रूपाणि जगृहे इन्द्रो हयजिहीर्षया ।
तानि पापस्य खण्डानि लिङ्गखण्डमिहोच्यते ॥
एवमिन्द्रे हरत्यश्वं वन्ययज्ञं जिघांसया ।
तद्गृहीतविसृष्टेषु पाखण्डेषु मतिर्नृणाम् ॥
धर्म इत्युपधर्मेषु नग्नरक्तपटादिषु ।
प्रायेण सज्जते भ्रान्त्या पेशलेषु च वाग्मिषु ॥
धर्मव्यतिकरो यत्र पाखण्डैरिन्द्रनिर्मितैः ॥
ऐन्द्रीं च मायामुपधर्ममातरं प्रचण्डपाखण्डपथं प्रभो जहि ॥

## द्विजकुलशापः ।

( भागवते )

विज्ञाय शापं गिरिशानुगाग्रणीर्नन्दीश्वरो रोषकषायदूषितः ।
दक्षाय शापं विससर्ज दारुणं ये चान्वमोदंस्तदवाच्यतां द्विजाः ॥ १ ॥
य एतन्मर्त्यमुद्दिश्य भगवत्यप्रतिद्रुहि ।
द्रुह्यत्यज्ञः पृथग्दृष्टिस्तत्त्वतो विमुखो भवेत् ॥ २ ॥

गृहेषु कूटधर्मेषु सक्तो ग्राम्यसुखेच्छया।
कर्मतन्त्रं वितनुते वेदवादविपन्नधीः ॥ ३ ॥
बुध्यापराभिध्यायिन्या विस्मृतात्मगतिः पशुः।
स्त्रीकामः सोऽस्त्वतितरां दक्षो वस्तमुखोऽचिरात् ॥ ४ ॥
विद्या बुद्धिरविद्यायां कर्ममय्यामसौ जडः।
संसरन्त्विह ये चामुमनुशर्वावमानिनम् ॥ ५ ॥
गिरः श्रुतायाः पुष्पिण्या मधुगन्धेन भूरिणा।
मथ्ना चोन्मथितात्मानः संमुह्यन्तु हरद्विषः ॥ ६ ॥
सर्वभक्षाद्विजावृत्त्यै धृतविद्या तपोव्रताः।
वित्तदेहेन्द्रियारामा याचका विचरन्त्विह ॥ ७ ॥
तस्यैवं ददतः शापं श्रुत्वा द्विजकुलाय वै।
भृगुः प्रत्यसृजच्छापं ब्रह्मदंडं दुरत्ययम् ॥ ८ ॥
भव व्रतधरा ये च ये च तान्समनुव्रताः।
पाखण्डिनस्ते भवन्तु सच्छास्त्रपरिपंथिनः ॥ ९ ॥
नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः।
विशन्तु शिवदीक्षायां यत्र दैवं सुरासवम् ॥ १० ॥
ब्रह्म च ब्राह्मणांश्चैव यद्यूयं परिनिन्दथ।
सेतुं विधारणं पुंसामतः पाखण्डमाश्रिताः ॥ ११ ॥

एष एव हि लोकानां शिवः पन्थाः सनातनः ।
यं पूर्वे चानुसंतस्थुर्यत्प्रमाणं जनार्दनः ॥ १२ ॥
तद्ब्रह्म परमं शुद्धं सतां वर्त्मसनातनम् ।
विगर्हयात पाखण्डं दैवं वो यत्र भूतराट् ॥ १३ ॥

( मैत्रेय उवाच ॥ )

तस्यैवं वदतः शापं भृगोः क्ष भगवान् भवः ।
निश्चक्राम ततः किंचिद्विमना इव सानुगः ॥ १४ ॥
तेपि विश्वसृजः सत्रं सहस्रपरिवत्सरान् ।
संविधाय महेष्वास यत्रेज्य ऋषभो हरिः ॥ १५ ॥
आप्लुत्यावभृथं यत्र गङ्गायमुनयान्विता ।
विरजेनात्मना सर्वे स्वं स्वं धाम ययुस्ततः ॥ १६ ॥

# कलिनिवासस्थानानि ।

( कलि उवाच ॥ )

यत्रक्वचन वत्स्यामि सार्वभौम तवाज्ञया ।
लक्षये तत्र तत्रापि त्वामात्तेषु शरासनम् ॥ १ ॥
तन्मे धर्मभृतां श्रेष्ठस्थानं निर्देष्टुमर्हसि ।

यत्रैव निनयतो वत्स्य आतिष्ठंस्तेऽनुशासनम् ॥ २ ॥
अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ ।
द्यूतं पानं स्त्रियः सूना यत्राधर्मश्चतुर्विधः ॥ ३ ॥
पुनश्च याचमानाय जातरूपमदात्प्रभुः ।
ततोऽनृतं मदं कामं रजो वैरं च पञ्चमम् ॥ ४ ॥
अमूनि पञ्चस्थानानि ह्यधर्मप्रभवः कलिः ।
औत्तरेयेण दत्तानि न्यवसत्तन्निदेशकृत् ॥ ५ ॥
अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित् ।
विशेषतो धर्मशीलो राजा लोकपतिर्गुरुः ॥ ६ ॥

# कलिपाखंडधर्म ।

यस्य किलानुचरितमुपाकर्ण्य कोङ्कवेङ्ककुटकानां राजाऽर्हन्नामोपशिक्ष्य कलावधर्म उत्कृष्यमाणे भवितव्येन विमोहितः स्वधर्मपथमकुतोभयमपहाय कुपथपाषण्डमसमञ्जसं निजमनीषया मन्दः संप्रवर्तयिष्यते ॥ १ ॥

येन ह वाव कलौ मनुजापसदा देवमायामोहिताः स्वविधिनियोगशौचचारित्रविहीना देवहेलनान्यपव्रतानि निज-

निजेच्छया गृह्णाना अस्नानाचमनाशौचकेशोल्लुञ्चनादीनि कलिना ऽधर्मबहुलेनोपहतधियो ब्रह्मब्राह्मणयज्ञपुरुषलोकविदूषकाः प्रायेण भविष्यन्ति ॥ २ ॥

ते च ह्यर्वाक्तनया निजलोकयात्रयान्धपरंपरयाश्वस्तास्तमस्यन्धे स्वयमेव प्रपतिष्यन्ति ॥ ३ ॥

# कलिधर्मः।

( भागवते )

नापश्यं कुत्रचिच्छर्म मनः संतोपकारकम् ।
कलिनाऽधर्ममित्रेण धरेयं बाधतेऽधुना ॥ १ ॥
सत्यं नास्ति तपः शौचं दया दानं न विद्यते ।
उदरम्भरिणो जीवा वराकाः कूटभाषिणः ॥ २ ॥
मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः ।
पाखण्डनिरताः सन्तो विरक्ताः सपरिग्रहाः ॥ ३ ॥
तरुणीप्रभुता गेहे श्यालको बुद्धिदायकः ।
कन्याविक्रयिणो लोभाद्दम्पतीनां च कल्कनम् ॥ ४ ॥

आश्रमा यवनैरुद्धास्तीर्थानि सरितस्तथा ।
देवतायतनान्यत्र दुष्टैर्नष्टानि भूरिशः ॥ ५ ॥

न योगी नैव सिद्धो वा न ज्ञानी सत्क्रियो नरः ।
कलिदावानलेनात्र साधनं भस्मतां गतम् ॥ ६ ॥

[1]अट्टशूला जनपदाः शिवशूला द्विजातयः ।
कामिन्यः केशशूलिन्यः संभवन्ति कलाविह ॥ ७ ॥

शृणुष्वावहिता बाले युगोऽयं दारुणः कलिः ॥ ८ ॥

तेन लुप्तसदाचारो योगमार्गस्तपांसि च ।
जना अघासुरायन्ते शाठ्यदुष्कर्मकारिणः ॥ ९ ॥

इह सन्तो विषीदन्ति प्रहृष्यन्ति ह्यसाधवः ।
धत्ते धैर्यं तु यो धीमान्स धीरः पण्डितोऽथवा ॥ १० ॥

अस्पृश्यानवलोक्येयं शेषभारकरी धरा ।
वर्षे वर्षे क्रमाज्जाता मङ्गलं नापि दृश्यते ॥ ११ ॥

यदा मुकुन्दो भगवान् क्ष्मां त्यक्त्वा स्वपदं गतः ।
तद्दिनात्कलिरायातः सर्वसाधनबाधकः ॥ १२ ॥

---

१ अट्टमन्नं शिवो वेदः शूलो विक्रय उच्यते । केशो भगमिति प्रोक्तमिति प्राहुर्मनीषिणः ॥

यत्फलं नास्ति तपसा न योगेन समाधिना ।
तत्फलं लभते सम्यक्कलौ केशवकीर्तनात् ॥ १३ ॥
एकाकारं कलिं दृष्ट्वा सारसत्सारनीरसम् ।
विष्णुरातः स्थापितवान्कलिजानां सुखाय च ॥ १४ ॥
कुकर्माचरणात्सारः सर्वतो निर्गतोऽधुना ।
पदार्थाः संस्थिता भूमौ वीजहीना तुषा यथा ॥ १५ ॥
विप्रैर्भागवति वार्ता गेहे गेहे जने जने ।
कारिता कणलोभेन कथासारस्ततो गतः ॥ १६ ॥
अत्युग्र भूरिकर्माणो नास्तिका रौरवा जनाः ।
तेऽपि तिष्ठन्ति तीर्थेषु तीर्थसारस्ततो गतः ॥ १७ ॥
कामक्रोधमहालोभतृष्णाव्याकुलचेतसः ।
तेऽपि तिष्ठन्ति तपसि तपः सारस्ततो गतः ॥ १८ ॥
मनसश्चाजयाल्लोभाद्दम्भात्पाखण्डसंश्रयात् ।
शास्त्रानभ्यसनाच्चैव ध्यानयोगफलं गतम् ॥ १९ ॥
पण्डितास्तु कलत्रेण रमन्ते महिषा इव ।
पुत्रस्योत्पादने दक्षा अदक्षा मुक्तिसाधने ॥ २० ॥

न हि वैष्णवता कुत्र संप्रदायपुरःसरा।
एवं प्रलयतां प्राप्तो वस्तुसारः स्थले स्थले ॥ २१ ॥
अयं तु युगधर्मो हि वर्तते कस्य दूषणम्।

(भा. स्कं. १२ अ. २.)

सौराष्ट्रावन्त्या भीराश्च शूरा अर्बुदमालवाः।
व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः ॥ ३८ ॥
सिन्धोस्तटं चन्द्रभागां कौन्तीं काश्मीरमंडलं।
भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छाश्चाब्रह्मवर्चसः ॥ ३९ ॥
तुल्यकाला इमे राजन्म्लेच्छप्रायाश्च भूभृतः।
एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ॥ ४० ॥
स्त्रीबालगोद्विजघ्नाश्च परदारधनाहृताः।
उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः ॥ ४१ ॥
असंस्कृताः क्रियाहीना रजसा तमसावृताः।
प्रजास्ते भक्षयिष्यन्ति म्लेच्छाराजन्यरूपिणः ॥ ४२ ॥
तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः।
अन्योन्यतोराजभिश्च क्षयं यास्यन्ति पीडिताः ॥ ४३ ॥

श्रीशुक उवाच।

ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया।
कालेन बलिना राजन् क्षयत्यायुर्बलं स्मृतिः॥ १॥

वित्तमेव कलौ नृणां जन्माचारगुणोदयः।
धर्मन्यायव्यवस्थायां कारणं बलमेव हि॥ २॥

दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके।
स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि॥ ३॥

लिंग मेवाश्रमख्यातावन्योन्यापत्तिकारणम्।
आवृत्त्यां न्यायदौर्बल्यं पाण्डित्ये चापलं वचः॥ ४॥

अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव तु।
स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम्॥ ५॥

दूरेवार्ययनं तीर्थं लावण्यं केशधारणम्।
उदरं भरता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि॥ ६॥

दाक्ष्यं कुटुम्बभरणं यशोऽर्थे धर्मसेवनम्।
एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले॥ ७॥

ब्रह्मविट्क्षत्रशूद्राणां यो बली भवितानृपः।
प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ॥ ८ ॥

आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम्।
शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः ॥ ९ ॥

अनावृष्ट्या विनङ्क्ष्यन्ति दुर्भिक्षकरपीडिताः।
शीतवातातपप्रावृड् हिमैरन्योन्यतः प्रजाः ॥ १० ॥

क्षुत्तृड्भ्यां व्याधिभिश्चैव संतप्स्यन्ते च चिन्तया।
त्रिंशद्विंशति वर्षाणि परमायुः कलौ नृणाम् ॥ ११ ॥

क्षियमाणेषु देहेषु देहिनां कलिदोषतः।
वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् ॥ १२ ॥

पाखण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु।
चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु ॥ १३ ॥

शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु।
गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बंधुषु ॥ १४ ॥

अणुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु।
विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ॥ १५ ॥

इत्थं कलौ गतप्राये जने तु खरधर्मिणी ।
धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति ॥ १६ ॥

चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः ।
धर्मत्राणाय साधूनां जन्मकर्मापनुत्तये ॥ १७ ॥

शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः ।
भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥ १८ ॥

अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः ।
असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः ॥ १९ ॥

विचरन्नाशुना क्षोण्यां हयेनाप्रतिमद्युतिः ।
नृपलिङ्गच्छदो दस्यून्कोटिशो निहनिष्यति ॥ २० ॥

अथ तेषां भविष्यन्ति मनांसि विशदानि वै ।
वासुदेवाङ्गरागातिपुण्यगंधानिलस्पृशाम् ।
पौरजानपदानां वै हतेष्वखिलदस्युषु ॥ २१ ॥

तेषां प्रजाविसर्गश्च स्थविष्ठः संभविष्यति ।
वासुदेवे भगवति सत्त्वमूर्त्तौ हृदि स्थिते ॥ २२ ॥

यदावतीर्णो भगवान्कल्किर्धर्मपतिर्हरिः ।
कृतं भविष्यति तदा प्रजा सूतिश्च सात्त्विकी ॥ २३ ॥

यदा चन्द्रश्च सूर्यश्च तथातिष्य बृहस्पती ।
एकराशौ समेष्यन्ति तदा भवति तत्कृतम् ॥ २४ ॥

येऽतीता वर्तमाना ये भविष्यन्ति च पार्थिवाः
ते त उद्देशतः प्रोक्ता वंशीयाः सोमसूर्ययोः ॥ २५ ॥

आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम् ।
एतद्वर्षसहस्रं तु शतं पञ्चदशोत्तरम् ॥ २६ ॥

सप्तर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि ।
तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि ॥ २७ ॥

तेनैत ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम् ।
तेत्वदीये द्विजाः काले अधुना चाश्रिता मघाः ॥ २८ ॥

विष्णोर्भगवतो भानुः कृष्णाख्योऽसौदिवंगतः ।
तदा विशत्कलिर्लोकं पापे यद्रमते जनः ॥ २९ ॥

यावत्सपादपद्माभ्यां स्पृशन्नास्ते रमापतिः ।
तावत्कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् ॥ ३० ॥

यदादेवर्षयः सप्तमघासु विचरन्ति हि ।
तदाप्रवृत्तस्तुकलिर्द्वादशाब्दशतात्मकः ॥ ३१ ॥

यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः ।

तदानन्दात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥ ३२ ॥
यस्मिन्कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि ।
प्रतिपन्नं कलियुगमिति प्राहुः पुरा विदः ॥ ३३ ॥
दिव्याब्दानां सहस्रान्ते चतुर्थे तु पुनः कृतम् ।
भविष्यति यदा नृणां मन आत्मप्रकाशकम् ॥ ३४ ॥
इत्येष मानवो वंशो यथा संख्याय ते भुवि ।
तथा विट्शूद्रविप्राणां तास्ता ज्ञेया युगे युगे ॥ ३५ ॥
एतेषां नामलिङ्गानां पुरुषाणां महात्मनाम् ।
कथामात्रावशिष्टानां कीर्तिरेवस्थिता भुवि ॥ ३६ ॥
देवापिःशंतनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः ।
कलापग्राम आसाते महायोगबलान्वितौ ॥ ३७ ॥
ताविहैत्यकलेरन्ते वासुदेवानुशिक्षितौ ।
वर्णाश्रमयुतं धर्मं पूर्ववत्प्रथयिष्यतः ॥ ३८ ॥
कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ।
अनेन क्रमयोगेन भुवि प्राणिषु वर्तते ॥ ३९ ॥
राजन्नेते मया प्रोक्ता नरदेवास्तथापरे ।
भूमौ मम त्वं कृत्वान्ते हित्वेमां निधनं गताः ॥ ४० ॥

कृमिविड् भस्मसंज्ञान्ते राजनाम्नोऽपि यस्य च ।
भूतध्रुक् तत्कृते स्वार्थं किंवेद निरयो यतः ॥ ४१ ॥
कथं सेयमखण्डाभूः पूर्वैर्मे पुरुषैर्धृता ।
मत्पुत्रस्य च पौत्रस्य मत्पूर्वावंशजस्य वा ॥ ४२ ॥
तेजोबन्नमयं कायं गृहीत्वाऽऽत्मतया बुधाः ।
महीं ममतया चोभौ हित्वान्तेऽदर्शनं गताः ॥ ४३ ॥
ये ये भूपतयो राजन्भुञ्जते भुवमोजसा ।
कालेन ते कृताः सर्वे कथामात्राः कथासु च ॥ ४४ ॥

श्री शुक उवाच ॥

दृष्ट्वात्मनिजये व्यग्रान्नृपान्हसति भूरियम् ।
अहो मा विजिगीषन्ति मृत्योःक्रीडनका नृपाः ॥ १ ॥
काम एष नरेन्द्राणां मोघः स्याद्विदुषामपि ।
येन फेनोपमे पिण्डे येऽतिविश्रम्भिता नृपाः ॥ २ ॥
पूर्वं निर्जित्य षड्वर्गं ज्येष्यामो राजमन्त्रिणः ।
ततः सचिवपौरात्प करीन्द्रानस्यकण्टकान् ॥ ३ ॥

आत्मारामाः समदृशः प्रायशः श्रमणा जनाः ॥ १९ ॥
त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः ।
अधर्मपादैरनृतहिंसाऽसंतोषविग्रहैः ॥ २० ॥
तदाक्रिया तपो निष्ठा नातिहिंस्रानलम्पटाः ।
त्रैवर्गिकास्त्रयी वृद्धा वर्णा ब्रह्मोत्तरा नृप ॥ २१ ॥
तपः सत्य दया दानेष्वर्धं ह्रसति द्वापरे ।
हिंसातुष्ट्यनृतद्वेषेर्धर्मस्याधर्मलक्षणैः ॥ २२ ॥
यशस्विनो महाशीलाः स्वाध्यायाध्ययने रताः ।
आढ्याः कुटुम्बिनो हृष्टा वर्णाः क्षत्रद्विजोत्तराः ॥ २३ ॥
कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः ।
एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति ॥ २४ ॥
तस्मिँल्लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः ।
दुर्भगा भूरितर्षाश्च शूद्रदासोत्तराः प्रजाः ॥ २५ ॥
सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ।
कालसंचोदितास्ते वै परिवर्तन्त आत्मनि ॥ २६ ॥
प्रभवन्ति यदा सत्त्वे मनोबुद्धीन्द्रियाणि च ।
तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रुचिः ॥ २७ ॥

यदा धर्मार्थकामेषु भक्तिर्भवति देहिनाम् ।
तदा त्रेता रजोवृत्तिरितिजानीहि बुद्धिमन् ॥ २८ ॥

यदा लोभस्त्वसंतोषो मानोदम्भोऽथमत्सरः ।
कर्मणां चापि काम्यानां द्वापरं तद्रजस्तमः ॥ २९ ॥

यदा मायानृतं तन्द्रा निद्रा हिंसा विषादनम् ।
शोको मोहो भयं दैन्यं सकलिस्तामसः स्मृतः ॥ ३० ॥

यस्मात्क्षुद्र दृशोमर्त्याः क्षुद्रभाग्या महाशनाः ।
कामिनोवित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥ ३१ ॥

दस्यूत्कृष्टा जनपदा वेदाः पाखण्डदूषिताः ।
राजनश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ॥ ३२ ॥

अव्रता बटवोऽशौचा भिक्षवश्च कुटुम्बिनः ।
तपस्विनो ग्रामवासा न्यासिनोऽत्यर्थलोलुपाः ॥ ३३ ॥

ह्रस्वकायामहाहाराभूर्य पत्या गतह्रियः ।
शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥ ३४ ॥

पणयिष्यन्ति वै क्षुद्राः किराटाः कूटकारिणः ।
अनापद्यपि मंस्यन्ते वार्तां साधु जुगुप्सिताम् ॥ ३५ ॥

पतिं त्यक्षन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् ।

भृत्यं विपन्नं पतयः कौलंगाश्चापयस्विनीः ॥ ३६ ॥
पितृभ्रातृसुहृज्ज्ञातीन्हित्वा सौरतसौहृदाः ।
ननांदृस्यालसंवादादीनास्त्रैणाः कलौ नराः ॥ ३७ ॥

शूद्राः प्रतिग्रहीष्यन्ति तपोवेशोपजीविनः ।
धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥ ३८ ॥

नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः ।
निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥ ३९ ॥

वासोऽन्नपानशयनव्यवायस्नानभूषणैः ।
हीनाः पिशाचसंदर्शा भविष्यन्ति कलौ प्रजाः ॥ ४० ॥

कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः ।
त्यक्ष्यन्ति च प्रियान्प्राणान्हनिष्यन्ति स्वकानपि ॥ ४१ ॥

न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि ।
पुत्रान्सर्वार्थकुशलान्क्षुद्राः शिश्नोदरं भराः ॥ ४२ ॥

कलौ न राजञ्जगतां परं गुरुं त्रिलोकनाथानतपादपङ्कजम् ।
प्रायेणमर्त्या भगवन्तमच्युतं यक्ष्यन्ति पाखण्डविभिन्नचेतसः ॥

यन्नामधेयं म्रियमाण आतुरः पतन्स्खलन्वाविवशो गृणन्पुमान् ।
विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः।४४।

पुंसां कलिकृतान्दोषान्द्रव्यदेशात्मसंभवान्।
सर्वान्हरति चित्तस्थो भगवान्पुरुषोत्तमः ॥ ४५ ॥

श्रुतः संकीर्तितो ध्यातः पूजितश्चादृतोऽपि वा।
नृणां धुनोति भगवान्हृत्स्थो जन्मायुताशुभम् ॥ ४६ ॥

यथा हेम्नि स्थितो वन्हिर्दुर्वर्णं हन्ति धातुजम्।
एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥ ४७ ॥

विद्या तपः प्राणनिरोधमैत्री तीर्थाभिषेकव्रतदानजप्यैः।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥४८॥

तस्मात्सर्वात्मनाराजन्हृदिस्थं कुरु केशवम्।
म्रियमाणो ह्यवहितस्ततो यासि परां गतिम् ॥ ४९ ॥

म्रियमाणैरभिध्येयो भगवान्परमेश्वरः।
आत्मभावं नियत्यङ्गसर्वात्मासर्वसंश्रयः ॥ ५० ॥

कलेर्दोषनिधे राजन्नस्तिह्येको महान्गुणः।
कीर्तनादेव कृष्णस्य मुक्तसंगः परं व्रजेत् ॥ ५१ ॥

कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः।
द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥ ५२ ॥

(इति भा. स्कं. १२. अ. १३.)

सहस्रांते नराः सर्वे प्रायशोऽनृतवादिनः ।
यज्ञप्रतिनिधिः पार्थ दानप्रतिनिधिस्तथा ॥ ३० ॥
व्रतप्रतिनिधिश्चैव तस्मिन्काले प्रवर्तते ।
ब्राह्मणाः शूद्रकर्माणस्तथा शूद्राधनार्जकाः ॥ ३१ ॥
क्षत्रधर्मेण वाप्यत्र वर्तयंति गते युगे ।
निवृत्तयज्ञस्वाध्याया दंडाजिनविवर्जिताः ॥ ३२ ॥
ब्राह्मणाः सर्वभक्षाश्च भविष्यंति कलौ युगे ।
अजपा ब्राह्मणास्तात शूद्रा जपपरायणाः ॥ ३३ ॥
विपरीते तदालोके पूर्वरूपं क्षयस्य तत् ।
बहवो म्लेच्छराजानः पृथिव्यां मनुजाधिप ॥ ३४ ॥
मृषानुशासिनः पापा मृषावादपरायणाः ।
आंध्रा शकाः पुलिंदाश्च यवनाश्च नराधिपाः ॥ ३५ ॥
कांबोजा वाल्हिकाः शूरास्तथाऽऽभीरा नरोत्तम ।
न तदा ब्राह्मणः कश्चित्स्वधर्ममुपजीवति ॥ ३६ ॥
क्षत्रियाश्चापिवैश्याश्च विकर्मस्था नराधिप ।
अल्पायुषः स्वल्पबलाः स्वल्पवीर्यपराक्रमाः ॥ ३७ ॥

अल्पसाराल्पदेहाश्च तथा सत्याल्पभाषिणः ।
बहुशून्या जनपदा मृगव्यालावृता दिशः ॥ ३८ ॥
युगांते समनुप्राप्ते वृथा च ब्रह्मवादिनः ।
भोवादिनस्तथा शूद्रा ब्राह्मणाश्चार्यवादिनः ॥ ३९ ॥
युगांते मनुजव्याघ्र भवंति बहुजंतवः ।
न तथा घ्राणयुक्ताश्च सर्वगंधा विशां पते ॥ ४० ॥
रसाश्च मनुजव्याघ्र न तथा स्वादुयोगिनः ।
बहुप्रजा ह्रस्वदेहाः शीलाचारविवर्जिताः ।
मुखेभगाः स्त्रियो राजन् भविष्यंति युगक्षये ॥ ४१ ॥
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
केशशूलाः स्त्रियो राजन् भविष्यंति युगक्षये ॥ ४२ ॥
अल्पक्षीरास्तथा गावो भविष्यंति जनाधिप ।
अल्पपुष्पफलाश्चापि पादपा बहुवायसाः ॥ ४३ ॥
ब्रह्मवध्यानुलिप्तानां तथा मिथ्याभिशंसिनां ।
नृपाणां पृथिवीपाल प्रतिगृह्णंति वै द्विजाः ॥ ४४ ॥

लोभमोहपरीताश्च मिथ्याधर्मध्वजावृताः ।
भिक्षार्थं पृथिवीपाल चंचूर्यंते द्विजैर्दिशः ॥ ४५ ॥
करभारभयाद्भीतागृहस्थाः परिमोषकाः ।
मुनिच्छद्माकृतिच्छन्ना वाणिज्यमुपजीविनः ॥ ४६ ॥
मिथ्या च नखरोमाणि धारयंति तदा द्विजाः ।
अर्थलोभान्नरव्याघ्र तथा च ब्रह्मचारिणः ॥ ४७ ॥
आश्रमेषु वृथाचाराः पानपा गुरुतल्पगाः ।
इह लौकिकमीहंते मांसशोणितवर्धनं ॥ ४८ ॥
बहुपाखंडसंकीर्णाः परान्नगुणवादिनः ।
आश्रमामनुजव्याघ्र भविष्यंति युगक्षये ॥ ४९ ॥
यथर्तुवर्षी भगवान्न तथा पाकशासनः ।
न चापि सर्वबीजानि सम्यग्रोहंति भारत ॥ ५० ॥
हिंसाभिरामश्च जनस्तथा संपद्यते शुचिः ।
अधर्मफलमत्यर्थं तदा भवति चानघ ॥ ५१ ॥
तदा च पृथिवीपाल यो भवेद्धर्मसंयुतः ।
अल्पायुः स हि मंतव्यो न हि धर्मोऽस्ति कश्चन ॥ ५२ ॥

भूयिष्ठं कूटमानैश्च पण्यं विक्रीडते जनः।
वणिजश्च नरव्याघ्र बहुमाया भवंत्युत ॥ ५३ ॥
धर्मिष्ठाः परिहीयंते पापीयान्वर्धते जनः।
अल्पायुषो दरिद्राश्च धर्मिष्ठा मानवास्तथा ॥
दीर्घायुषः समृद्धाश्च विधर्माणो युगक्षये ॥ ५५ ॥
नगराणां विहारेषु विधर्माणो युगक्षये।
अधर्मिष्ठैरुपायैश्च प्रजा व्यवहरंत्युतः ॥ ५६ ॥
संचयेन तथाऽल्पेन भवंत्याढ्यमदान्विताः।
धनं विश्वासतो न्यस्तं मिथो भूयिष्ठशो नराः ॥ ५७ ॥
हर्तुं व्यवसिता राजन्पापाचारसमन्विताः।
नैतदस्तीति मनुजा वर्तंते निरपत्रपाः ॥ ५८ ॥
पुरुषादानि सत्वानि पक्षिणोऽथ मृगास्तथा।
नगराणां विहारेषु चैटयेष्वपि च शेरते ॥ ५९ ॥
सप्तवर्षाष्टवर्षाश्च स्त्रियो गर्भधरा नृप।
दशद्वादशवर्षाणां पुंसां पुत्रः प्रजायते ॥ ६० ॥
भवंति षोडशे वर्षे नराः पलितिनस्तथा।

आयुः क्षयो मनुष्याणां क्षिप्रमेव प्रपद्यते ॥ ६१ ॥
क्षीणायुषो महाराज तरुणा वृद्धशीलिनः ।
तरुणानां च यच्छीलं तद्वृद्धेषु प्रजायते ॥ ६२ ॥
विपरीतास्तदा नार्यो वंचयित्वाऽर्हतः पतीन् ।
व्युच्चरंत्यपि दुःशीला दासैः पशुभिरेव च ॥ ६३ ॥
वीरपत्न्यस्तथा नार्यः संश्रयंति नरान्नृप ।
भर्तारमपि जीवंतमन्यान्व्यभिचरंत्युत ॥ ६४ ॥

## कलिधर्मः

( महाभारते )

अस्मिन्कलियुगेत्वस्ति पुनः कौतूहलं मम ।
समाकुलेषु धर्मेषु किंतु शेषं भविष्यति ॥ ३ ॥
किं वीर्या मानवास्तत्र किमाहारविहारिणः ।
किमायुषः किंवसना भविष्यंति युगक्षये ॥ ४ ॥
कां च काष्ठां समासाद्य पुनः संपत्स्यते कृतं ।
विस्तरेण मुने ब्रूहि विचित्राणीह भाषसे ॥ ५ ॥

इत्युक्तः स मुनिश्रेष्ठः पुनरेवाभ्यभाषत ।
रमयन् वृष्णिशार्दूलं पांडवांश्च महानृषिः ॥ ६ ॥

मार्कंडेय उवाच ॥

शृणुराजन्मया दृष्टं यत्पुरा श्रुतमेव च ।
अनुभूतं च राजेंद्र देवदेवप्रसादजं ॥ ७ ॥
भविष्यं सर्वलोकस्य वृत्तांतं भरतर्षभ ।
कलुषं कालमासाद्य कथ्यमानं निबोध मे ॥ ८ ॥
कृते चतुष्पात्सकलो निर्व्याजोपाधिवर्जितः ।
वृषः प्रतिष्ठितो धर्मो मनुष्ये भरतर्षभ ॥ ९ ॥
अधर्मपादविद्धस्तु त्रिभिरंशैः प्रतिष्ठितः ।
त्रेतायां द्वापरेऽर्धेन व्यामिश्रो धर्म उच्यते ॥ १० ॥
त्रिभिरंशैरधर्मस्तु लोकानाक्रम्य तिष्ठति ।
तामसं युगमासाद्य तदा भरतसत्तम ॥ ११ ॥
चतुर्थांशेन धर्मस्तु मनुष्यानुपतिष्ठति ।
आयुर्वीर्यमथोबुद्धिर्बलं तेजश्च पांडव ॥ १२ ॥
मनुष्याणामनुयुगं ह्रसतीति निबोध मे ।

राजानो ब्राह्मणा वैश्याः शूद्राश्चैव युधिष्ठिर ॥ १३ ॥

व्याजैर्धर्मं चरिष्यंति धर्मवैतंसिका नराः ।
सत्यं संक्षेप्स्यते लोके नरैः पंडितमानिभिः ॥ १४ ॥

सत्यहान्या ततस्तेषामायुरल्पं भविष्यति ।
आयुषः प्रक्षयाद्विद्या न शक्ष्यंत्युपजीवितुं ॥ १५ ॥

विद्याहीना न विज्ञानाल्लोभोऽप्यभिभविष्यति ।
लोभक्रोधपरामूढाः कामासक्ताश्च मानवाः ॥ १६ ॥

वैरबद्धा भविष्यंति परस्परवधैषिणः ।
ब्राह्मणाः क्षत्रिया वैश्याः संकीर्यंतः परस्परं ॥ १७ ॥

शूद्रतुल्या भविष्यंति तपःसत्यविवर्जिताः ।
अंत्या मध्या भविष्यंति मध्याश्चांत्या न संशयः ॥ १८ ॥

ईदृशो भविता लोको युगांते पर्युपस्थिते ।
वस्त्राणां प्रवराशाणी धान्यानां कोरदूशकाः ॥ १९ ॥

भार्यामित्राश्च पुरुषा भविष्यंति युगक्षये ।
मत्स्यामिषेण जीवंतो दुहंतश्चाप्य जैडकं ॥ २० ॥

गोषु नष्टासु पुरुषा येपि नित्यं धृतव्रताः ।

तेऽपि लोभसमायुक्ता भविष्यंति युगक्षये ॥ २१ ॥

अन्योन्यं परिमुष्णंतो हिंसयंतश्च मानवाः ।
अजपा नास्तिकाः स्तेना भविष्यंति युगक्षये ॥ २२ ॥

सरित्तीरेषु कुद्दालैर्वापयिष्यंति चौषधीः ।
ताश्चाप्यल्पफलास्तेषां भविष्यंति युगक्षये ॥ २३ ॥

श्राद्धे दैवे च पुरुषा येऽपि नित्यं धृतव्रताः ।
तेऽपि लोभसमायुक्ता भोक्ष्यंतीह परस्परं ॥ २४ ॥

पितापुत्रस्य भोक्ता च पितुः पुत्रस्तथैव च ।
अतिक्रांतानि भोज्यानि भविष्यंति युगक्षये ॥ २५ ॥

न व्रतानि चरिष्यंति ब्राह्मणा वेदनिंदकाः ॥ २५ ॥

न यक्ष्यंति न होष्यंति हेतुवादविमोहिताः ।
निम्नेष्वीहांकरिष्यंति हेतुवादविमोहिताः ॥२६॥

निम्नेकृषिं करिष्यंति योक्ष्यंति धुरिधेनुकाः ।
एकहायनवत्सांश्च योजयिष्यंति मानवाः ॥ २७ ॥

पुत्रः पितृवधं कृत्वा पिता पुत्रवधं तथा ।
निरुद्वेगो बृहद्वादी न निंदामुपलप्स्यते ॥ २८ ॥

म्लेच्छभूतं जगत्सर्वं निष्क्रियं यज्ञवर्जितं।
भविष्यंति निरानंदमनुत्सवमथो तथा ॥ २९ ॥

प्रायशः कृपणानां हि तथा बंधुमतामपि।
विधवानां च वित्तानि हरिष्यंतीह मानवाः ॥ ३० ॥

स्वल्पवीर्यबलाः स्तब्धा लोभमोहपरायणाः।
तत्कथादानसंतुष्टा दुष्टानामपि मानवाः ॥ ३१ ॥

परिग्रहं करिष्यंति मायाचारपरिग्रहाः।
समाह्वयंतः कौंतेय राजानः पापबुद्धयः ॥ ३२ ॥

परस्परवधोद्युक्ता मूर्खाः पंडितमानिनः।
भविष्यंति युगस्यांते क्षत्रिया लोककंटकाः ॥ ३३ ॥

अरक्षितारो लुब्धाश्च मानाहंकारदर्पिताः।
केवलं दंडरुचयो भविष्यंति युगक्षये ॥ ३४ ॥

आक्रम्याक्रम्य साधूनां दारांश्चापि धनानि च।
भोक्ष्यंते निरनुक्रोशा रुदतामपि भारत ॥ ३५ ॥

न कन्यां याचते कश्चिन्नापि कन्या प्रदीयते।
स्वयंग्राहा भविष्यंति युगांते समुपस्थिते ॥ ३६ ॥

राजानश्चाप्यसंतुष्टाः परार्थान्मूढचेतसः ।
सर्वोपायैर्हरिष्यंति युगांते पर्युपस्थिते ॥ ३७ ॥

म्लेच्छीभूतं जगत्सर्वं भविष्यति न संशयः ।
हस्तो हस्तं परिमुषेद्युगांते समुपस्थिते ॥ ३८ ॥

सत्यं संक्षिप्यते लोके नरैः पंडितमानिभिः ।
स्थविरा बालमतयो बालाः स्थविरबुद्धयः ॥ ३९ ॥

भीरुस्तथा शूरमानी शूरा भीरु विषादिनः ।
न विश्वसंति चान्योन्यं युगांते पर्युपस्थिते ॥ ४० ॥

एकाहार्यं युयं सर्वं लोभमोहव्यवस्थितं ।
अधर्मो वर्द्धते तत्र न धर्मः प्रवर्तते ॥ ४१ ॥

ब्राह्मणाः क्षत्रिया वैश्या न शिष्यंति जनाधिप ।
एकवर्णस्तदा लोको भविष्यति युगक्षये ॥ ४२ ॥

न क्षंस्यति पिता पुत्रं पुत्रश्च पितरं तथा ।
भार्याश्च पतिशुश्रूषां न करिष्यंति संक्षये ॥ ४३ ॥

ये यवान्ना जनपदा गोधूमान्नास्तथैव च ।
तान् देशान्संश्रयिष्यंति युगांते पर्युपस्थिते ॥ ४४ ॥

यदा भविष्यंति नरास्तदा संक्षेप्स्यते युगं ॥ ६० ॥

आश्रयिष्यंति च नदीः पर्वतान्विषमाणि च ।
प्रधावमाना वित्रस्ता द्विजाः कुरुकुलोद्वह ॥ ६१ ॥

दस्युभिः पीडिता राजन् काका इव द्विजोत्तमाः
कुराजभिश्च सततं करभारप्रपीडिताः ॥ ६२ ॥

धैर्यं त्यक्त्वा महीपाल दारुणे युगसंक्षये ।
विकर्माणि करिष्यंति शूद्राणां परिचारकाः ॥ ६३ ॥

शूद्रा धर्मं प्रवक्ष्यंति ब्राह्मणाः पर्युपासकाः ।
श्रोतारश्च भविष्यंति प्रामाण्येन व्यवस्थिताः ॥ ६४ ॥

विपरीतश्च लोकोऽयं भविष्यत्यधरोत्तरः ।
एडूकान्पूजयिष्यंति वर्जयिष्यंति देवताः ॥ ६५ ॥

शूद्राः परिचरिष्यंति न द्विजान्युगसंक्षये ।
आश्रमेषु महर्षीणां ब्राह्मणा वसयेषु च ॥ ६६ ॥

देवस्थानेषु चैत्येषु नागानामालयेषु च ।
एडूकचिह्ना पृथिवी न देवगृहभूषिता ॥ ६७ ॥

भविष्यति युगे क्षीणे तद्युगांतस्य लक्षणं ।

यदा रौद्रा धर्महीना मांसादाः पानपास्तथा ॥ ६८ ॥

भविष्यंति नरा नित्यं तदा संक्षेप्स्यते युगं ।
पुष्पं पुष्पे यदा राजन्फले वा फलमाश्रितं ॥ ६९ ॥

प्रजास्यति महाराज तदा संक्षेप्स्यते युगं ।
अकालवर्षी पर्जन्यो भविष्यति गते युगे ॥ ७० ॥

अक्रमेण मनुष्याणां भविष्यंति तदाक्रियाः ।
विरोधमथ यास्यंति वृषलाब्राह्मणैः सह ॥ ७१ ॥

मही म्लेच्छजनाकीर्णा भविष्यति ततोऽचिरात् ।
करभारभयाद्विप्रा भजिष्यंति दिशोदश ॥ ७२ ॥

निर्विशेषा जनपदास्तथा विष्टिकरार्दिताः ।
आश्रमानुपलप्स्यंति फलमूलोपजीविनः ॥ ७३ ॥

एवं पर्याकुले लोके मर्यादा न भविष्यति ।
न स्थास्यंत्युपदेशे च शिष्या विप्रियकारिणः ॥ ७४ ॥

आचार्योऽपनिधिश्चैव भर्त्स्यते तदनंतरं ।
अर्थयुक्त्या प्रवात्स्यंति मित्रसंबंधिबांधवाः ॥ ७५ ॥

अभावः सर्वभूतानां युगांते संभविष्यति।

दिशः प्रज्वलिताः सर्वा नक्षत्राण्यप्रभाणि च ॥ ७६ ॥

ज्योतींषि प्रतिकूलानि वाताः पर्याकुलास्तथा ।
उल्कापाताश्चबहवो महाभयनिदर्शकाः ॥ ७७ ॥

षड्भिरन्यैश्च सहितो भास्करः प्रतपिष्यति ।
तुमुलाश्चापि निर्ह्रादा दिग्दाहाश्चापि सर्वशः ॥ ७८ ॥

कबंधांतर्हितो भानुरुदयास्तमने तदा ।
अकालवर्षी भगवान् भविष्यति सहस्रदृक् ॥ ७९ ॥

सस्यानि च न रोक्ष्यंति युगांते पर्युपस्थिते ।
अभीक्ष्णं क्रूरवादिन्यः परुषा रुदितप्रियाः ॥ ८० ॥

भर्तृणां वचने चैव न स्थास्यंति ततः स्त्रियः ।
पुत्राश्च मातापितरौ हनिष्यंति युगक्षये ॥ ८१ ॥

सूदयिष्यंति च पतीन् स्त्रियः पुत्रानपाश्रिताः ।
अपर्वणि महाराज सूर्यं राहुरुपैष्यति ॥ ८२ ॥

युगांते हुतभुक्चापि सर्वतः प्रज्वलिष्यति ।
पानीयं भोजनं चापि याचमानास्तदाऽध्वगाः ॥ ८३ ॥

न लप्स्यंते निवासं च निरस्ताः पथि शेरते ।

निर्घातवायसा नागाः शकुनाः समृगद्विजाः ॥ ८४ ॥

रूक्षावाचो विमोक्ष्यंति युगांते पर्युपस्थिते ।
मित्रसंबंधिनश्चापि संत्यक्ष्यंति नरास्तदा ॥ ८५ ॥

जनं परिजनं चापि युगांते पर्युपस्थिते ।
अथ देशान् दिशश्चापि पत्तनानि पुराणि च ॥ ८६ ॥

क्रमशः संश्रयिष्यंति युगांते पर्युपस्थिते ।
हा तात हा सुतेत्येवं तदा वाचः सुदारुणाः ॥ ८७ ॥

विक्रोशमानश्चान्योन्यं जनो गां पर्यटिष्यति ।
ततस्तुमुलसंघाते वर्तमाने युगक्षये ॥ ८८ ॥

द्विजातिपूर्वको लोकः क्रमेण प्रभविष्यति ।
ततः कालांतरेऽन्यस्मिन् पुनर्लोकविवृद्धये ॥ ८९ ॥

भविष्यति पुनर्दैवमनुकूलं यदृच्छया ।
यदा सूर्यश्च चंद्रश्च तथातिष्यबृहस्पती ॥ ९० ॥

एकराशौ समेष्यंति प्रपत्स्यति तदाकृतं ॥
कालवर्षी च पर्जन्यो नक्षत्राणि शुभानि च ॥ ९१ ॥

प्रदक्षिणा गृहाश्चापि भविष्यंत्यनुलोमगाः ।

क्षेमं सुभिक्ष्यमारोग्यं भविष्यति निरामयं ॥ ९२ ॥

कल्की विष्णुयशानाम द्विजः काल प्रचोदितः।
उत्पत्स्यते महावीर्यो महाबुद्धि पराक्रमः ॥ ९३ ॥

संभूतः संभलग्रामे ब्राह्मणावसथे शुभे।
मनसा तस्य सर्वाणि वाहनान्यायुधानि च ॥ ९४ ॥

उपस्थास्यंति योधाश्च शस्त्राणि कवचानि च।
स धर्मविजयी राजा चक्रवर्ती भविष्यति ॥ ९५ ॥

स चेमं संकुलं लोकं प्रसादमुपनेष्यति।
उत्थितो ब्राह्मणो दीप्तः क्षयांतकृदुदारधीः ॥ ९६ ॥

संक्षेपको हि सर्वस्य युगस्य परिवर्तकः।
स सर्वत्र गतान् क्षुद्रान् ब्राह्मणैः परिवारितः।
उत्सादयिष्यति तदा सर्वम्लेच्छगणान् द्विजः ॥ ९७ ॥

मार्कंडेय उवाच।

ततश्चैारक्षयं कृत्वा द्विजेभ्यः पृथिवीमिमां।
वाजिमेधे महायज्ञे विधिवत्कल्पयिष्यति ॥ १ ॥

स्थापयित्वा च मर्यादाः स्वयंभुविहिताः शुभाः।

वनं पुण्ययशःकर्मा रमणीयं प्रवेक्ष्यति ॥ २ ॥
तच्छीलमनुवर्त्स्यंति मनुष्या लोकवासिनः।
विप्रैश्चौरक्षयश्चैव कृते क्षेमं भविष्यति ॥ ३ ॥
कृष्णाजिनानि शक्तीश्च त्रिशूलान्यायुधानि च।
स्थापयन् द्विजशार्दूलो देशेषु विजितेषु च ॥ ४ ॥
संस्तूयमानो विप्रेंद्रैर्मानयानो द्विजोत्तमान्।
कल्की चरिष्यति महीं सदा दस्युवधेरतः ॥ ५ ॥
हा मातस्तात पुत्रेति तास्ता वाचः सुदारुणाः।
विक्रोशमानान् सुभृशं दस्यून्नेष्यति संक्षयं ॥ ६ ॥
ततोऽधर्मविनाशो वै धर्मवृद्धिश्च भारत।
भविष्यति कृते प्राप्ते क्रियावांश्च जनस्तथा ॥ ७ ॥
आरामाश्चैव चैत्याश्च तडागावसथास्तथा।
पुष्करिण्यश्च विविधा देवतायतनानि च ॥ ८ ॥
यज्ञक्रियाश्च विविधा भविष्यंति कृते युगे।
ब्राह्मणाः साधवश्चैव मुनयश्च तपस्विनः ॥ ९ ॥
आश्रमाः सहपाषंडाः स्थिताः सत्यजनाः प्रजाः।

प्ररोहंतिसर्वबीजानि रोप्यमाणानि चैवह ॥ १० ॥

सर्वेष्वृतुषु राजेंद्र सर्वं सस्यं भविष्यति।
नरादानेषु निरता व्रतेषु नियमेषु च ॥ ११ ॥

जप्ययज्ञपरा विप्रा धर्मकामामुदायुताः।
पालयिष्यंति राजानो धर्मेणेमां वसुंधरां ॥ १२ ॥

व्यवहाररता वैश्या भविष्यंति कृते युगे।
षट्कर्मनिरता विप्राः, क्षत्रिया विक्रमे रताः ॥ १३ ॥

शुश्रूषायां रताः शूद्रास्तथाः वर्णत्रयस्य च।
एष धर्मः कृतयुगे त्रेतायां द्वापरे तथा ॥ १४ ॥

पश्चिमे युगकाले च यः स ते संप्रकीर्तितः।
सर्वलोकस्य विदिता युगसंख्या च पांडव ॥ १५ ॥

एतत्ते सर्वमाख्यातमतीता नागतं तथा।
वायुप्रोक्तमनुस्मृत्य पुराणमृषिसंस्तुतं ॥ १६ ॥

एवं संसारमार्गा मे बहुशश्चिरजीविना।
दृष्टाश्चैवानुभूताश्च तांस्ते कथितवानहं ॥ १७ ॥

इदं चैवापरं भूयः सह भ्रातृभिरच्युत।
धर्मसंशयमोक्षार्थं निबोध वचनं मम ॥ १८ ॥

धर्मे त्वयाऽऽत्मा संयोज्यो नित्यं धर्मभृतां वर ।
धर्मात्मा हि सुखं राजन् प्रेत्य चेह च नंदति ॥ १९ ॥
निबोध च शुभां वाणीं यां प्रवक्ष्यामि तेऽनघ ।
न ब्राह्मणे परिभवः कर्तव्यस्ते कदाचन ॥ २० ॥
ब्राह्मणः कुपितो हन्यादपि लोकान्प्रतिज्ञया ॥
दयावान्सर्वभूतेषु हितो रक्तोऽनसूयकः ॥
सत्यवादी मृदुर्दांतः प्रजानां रक्षणेरतः ।
चर धर्मं त्यजाधर्मं पितॄन्देवांश्च पूजय ॥ २४ ॥

* * * * * *

शरणं त्वां प्रपन्नोऽस्मि शृणु चेदं वचो मम।
ये च त्वां मनुजा लोके कीर्तयिष्यंत्यतंद्रिताः ।
मत्प्रसूतं भयं तेषां न कदाचिद्भविष्यति ॥ ३६ ॥
भयार्तं शरणं यातं यदि मां त्वं न शप्स्यसे ।
एवमुक्तो नलो राजान्ययच्छत्कोपमात्मनः ॥ ३७ ॥
ततो भीतः कलिः क्षिप्रं प्रविवेश बिभीतकं ।
कलिस्त्वन्यैस्तदाऽदृश्यः कथयन्नैषधेन वै ॥ ३८ ॥
बिभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात् ॥

# पंचमहापातकानि·

( छा. उ. )

स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन्ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैरिति ॥

# कलिवर्ज्यप्रकरणम् ।

ब्रह्मपुराणेऽपि—

दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः ।
गोत्रान्मातुः सपिण्डात्तु विवाहो गोवधस्तथा ॥
नराऽश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः ।

क्रतुरपि—

देवराच्च सुतोत्पत्तिर्दत्ता कन्या न दीयते ।
न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुः ॥

वायुपुराणेऽपि—

ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥

तथा अन्येऽपि धर्मज्ञसमयप्रमाणकाः सन्ति ।

'विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।
बालिकाऽक्षतयोन्योश्च वरेणान्येन संस्कृतिः ॥

कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।
आततायि द्विजाग्र्याणां धर्मयुद्धे न हिंसनम् ॥

द्विजस्याब्धौ तु नौ यातुः शोधितस्यापि सङ्ग्रहः ।
सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् ॥

महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे ।
सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः ॥

अग्निहोत्रहवण्याश्च लेहोलीढापरिग्रहः ।
वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः ॥

वृत्त-स्वाध्यायसापेक्षमघसंकोचनं तथा ।
प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् ॥

गोपशुंदेवरात्पुत्रं सत्रयागं कमण्डलुम् ।
सुराप्रयोगं भिक्षुं च न कुर्वीत कलौयुगे ॥

अक्षता नरमेधश्च गोयज्ञश्च कमण्डलुः ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

मार्कण्डेयः—

माधुपर्किक पश्वर्थे ततो मात्रां निवेदयेत् ॥

स हिरण्यं वीजपात्रं द्रविणेन सदैव तु ॥

पशुः कलौ न कर्तव्य इत्याह भगवान्भृगुः ॥

# अथकलौनिषिद्धानि ।

समुद्रयात्रास्वीकारः कमण्डलुविधारणम् ।
द्विजानामसवर्णासु कन्या सूपयमस्तथा ॥ १ ॥

देवराच्चैः सुतोत्पत्तिर्मधुपर्के पशोर्वधः ।
मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥ २ ॥

दत्ता क्षतायाः कन्यायाः पुनर्दानं परस्य च ।
दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ ॥ ३ ॥

महाप्रस्थानगमनं गोमेधश्च तथा मखः ।
इमान्धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः ॥ ४ ॥

मद्यं वर्ज्यं महापापे मरणान्तविशोधनम् ।
सौत्रामण्यादि यज्ञेपि सुरापात्र ग्रहस्तथा ॥ ५ ॥

मद्यभक्षादिवामाद्यागमस्य तु न मानता ।
मीमांसा द्वितये सर्वशिष्टैश्च तदनादरात् ॥ ६ ॥

औरसो दत्तकश्चैतौ पुत्रौ कलि युगे स्मृतौ ।
अन्यान् दशविधान् पुत्रान्क्रीताद्यान्वर्जयेत्कलौ ॥ ७ ॥

कृते संभाष्य पतति त्रेतायां स्पर्शने न तु ।
द्वापरे त्वन्नमादाय कलौ पतति कर्मणा ॥ ८ ॥

त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ॥
द्वापरे कुलमेकं तु कर्त्तारं तु कलौ युगे ॥ ९ ॥

सत्राख्ययज्ञः कलौ वर्ज्यः ब्रह्महत्यादिमहापातकेषु प्रायश्चित्तेन नरकनिवृत्तिर्नभवति किंत्विहलोके व्यवहार्यतामात्रं कलौ भवति स्वर्णस्तेयादिषु तु प्रायश्चितेन नरकनिवृत्ति व्यवहार्यता च । केचित्तु रहस्यकृतेषु महापापेषु रहस्यप्राय-

श्चितं कलौ नोपदेष्टव्यमित्याहुः विप्रादिस्त्रीसंभोगेन भ्रष्टानां शूद्रादीनां प्रायश्चितेऽपि संसर्गो निषिद्धः। यज्ञे पशुमारणं सोम विक्रयश्च विप्राणां कलौ वर्ज्यः।

ज्येष्ठादिसर्वभ्रातॄणां समभाग कलौ स्मृतः ।
आततायिद्विजानां नो धर्मयुद्धेऽपि हिंसनम् ।। १ ।।

अब्धौ नौयातुर्द्विजस्य प्रायश्चित्तेऽपि संसर्गो न ।
गवार्थे ब्राह्मणार्थे च प्राणत्यागः कलौ न हि ।
द्विजानां गोपशूद्राद्रौ भोज्यान्नत्वं कलौ नहि ।। १ ।।

शिष्यस्य गुरुपत्नीषु न चिरं वासशीलता ।
आपदि क्षत्र वैश्यादिवृत्तिं विप्रः कलौ त्यजेत् ।। २ ।।

कलौ द्विजो न हि भवेदश्वस्तनिकजीविकः ।
द्वादशाब्दं गुरौ वासं मुखाग्निधमनक्रियाम् ।। ३ ।।
यतेर्भिक्षां सर्ववर्णे कलौ त्रीणि विवर्जयेत् ।
नवोदकनिषेधं च दक्षिणां गुरु वांच्छिताम् ।। ४ ।।
वृद्धरुग्णादिमरणं जलाग्निपतनादिभिः ।
गोतृप्तिमात्रे भूमिष्ठे पयस्याचमनक्रियाम् ।। ५ ।।

पितृवादे साक्षिदंडं कलौ पञ्च विवर्जयेत् ।
घृतदुग्धादिभिः पक्कमन्नं शूद्रात्कलौ त्यजेत् ॥ ६ ॥

भिक्षामटन्यती रात्रौ न वसेद्गृहिणां गृहे ।
विधूमसन्न मुसले काले भिक्षां कलौ त्यजेत् ॥ ७ ॥

चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च ।
कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः ॥ ८ ॥

संन्यासश्च न कर्त्तव्यो ब्राह्मणेन विजानता ।
त्रेतापरिग्रहः सर्वाधानम् अर्धाधानं स्मृतं ॥

श्रौतस्मार्त्ताग्न्योस्तु पृथक् कृतिः ।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रया ॥ ९ ॥

अस्यापवादः यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते ।
संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौयुगे ॥ १० ॥

इति शपथाःशकुनाः स्वप्नाः सामुद्रिकमुपश्रुतिः ।
देवपूजोपहारादेः संकल्पः कार्यसिद्धये ॥ १ ॥

प्रश्नोत्तरं कालविदांसंभवन्ति कलौ क्वचित् ।
इतिकलौकार्याकार्यनिर्णयः ॥

धर्मसिंधुसारे

कलियुगे कार्याकार्यविवेकः

गीतागंगा तथा विष्णुःकपिलाश्वत्थ सेवनम् ।
एकादशी व्रतं चैव सप्तमं न कलौ युगे ॥ १ ॥

विष्णुं शिवं वा भजतां गुरोःपित्रोश्च सेविनाम् ।
गोवैष्णव महाशैव तुलसी सेविनामपि ॥ २ ॥

न स्यात्कलिकृतो दोषः काश्यां निवसतामपि ।
कलौ गुरूणां भजनमीशभक्त्यधिकं स्मृतम् ॥ ३ ॥

जपादौ यत्र या संख्या कलौ सा स्याच्चतुर्गुणा ।
कलौ दानं महाश्रेष्ठं शिवविष्णोश्चकीर्तनम् ॥ ४ ॥

कृतेयद्दश भिर्वर्षैस्त्रेतायां हायनेन तु ।
द्वापरे तत्तु मासेन अहोरात्रेण तत्कलौ ॥ ५ ॥

कुशलान्याशुसिद्ध्यन्ति नेतराणि कृतानि यदितिकलौ पुण्यकर्मणां संकल्पेऽपि सिद्धिः पापानां त्वाचरणादेवेत्युक्तम् स्मृत्यन्तरविरोधेतु कलौपाराशरस्मृतिः ।

ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥ १ ॥

इति हेमाद्रौव्यासवचनम् अत्र कृतयुगाद्यधिकरणकध्यानादिफलार्थं कल्यधिकरणकं कीर्त्तनं विधियत इति व्याक्यार्थः। कौस्तुभकर्तृपितामहैर्भक्तिनिर्णये विस्तरेण निरूपितः। हेमाद्रौ

कलिंन्सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।
यत्र संकीर्त्तने नैव सर्वः स्वार्थोऽभिलभ्यते ॥ १ ॥

इतिश्रीभागवतवचनमुदाहृत्य संकीर्तनेन हरिसंकीर्तनेनेत्यर्थ इतिहेमाद्रावेवव्याख्यातम् ।

कृष्णवर्णंत्विषा कृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैःसंकीर्तनप्रायैर्यजन्तिहिसुमेधसः ॥ १ ॥

यज्ञादिस्वस्वाचारमाचरद्भिरपिकालेषु संकीर्त्तननिष्ठैर्भाव्यमित्याशयइतिकौस्तुभे अनेन चतुर्वर्गफलं नारायणाश्रयणमात्रेण

भवतीति सिद्धम् यावै सा धनसंपत्तिःपुरुषार्थ चतुष्टये ।

तयाविनातदाप्नोतिनरोनारायणाश्रयः ॥ १ ॥

इतिभारतोक्तेः श्रीभागवतेऽपि

धर्मार्थ काम मोक्षाख्यंय इच्छेच्छ्रेय आत्मनः ।
एकं ह्येवहरेस्तत्र कारणं पाद सेवनम् ॥ १ ॥

इति अत्रएकपदावधारणादिपदैरन्यसाधनानपेक्षत्वंभक्ति-नपेक्षत्वंभक्तियोगस्योच्यते ज्ञानयोगादेश्चहरिपादसेवनसापे-क्षत्वंध्वन्यते तथा च स्पष्ट

मेकादशादौ तस्मान्मद्भक्तियुक्तस्य योगिनोवैमदात्मनः ।
न ज्ञानंन च वैराग्यं प्रायःश्रेयो भवे दिह ॥ १ ॥
यत्कर्म भिर्यत्तप सा ज्ञान वैराग्यतश्चयत् ।
योगेन दान धर्मेण श्रेयोभिरितरैरपि ॥ २ ॥
सर्वंमद् भक्ति योगेनमद्भक्तोलभते ञ्जसा ।
स्वर्गापवर्गमद्धामकथं चिद्यदिवाञ्छति ॥ ३ ॥
श्रेयःस्रुतिंभक्तिमुदस्यतेविभोक्लिश्यन्तिये केवलबोधलब्धये।
तेषामसौक्लेशल एवशिष्यतेनान्यद्यथास्थूल तुषावघातिनाम्॥१॥

इत्यादि परस्सहस्रवचनानिज्ञानयोगस्य भगवदारा धन तत्प्रसादं च विनैव सिद्धिरिति क्वापि केनाप्यनुक्तेश्च सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदित्यधिकरणे ज्ञानोत्पत्तौ यज्ञादिसर्वसाधनापेक्षोक्तेश्च किं च भक्तियोगे दुराचारिणोपि दृढवैराग्यरहितस्याप्यधिकारो गम्यते।

अपिचेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मंतव्यः सम्यग्व्यवहितो हि सः ॥ १ ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छांतिं निगच्छति।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ २ ॥
न निर्विण्णो नातिसक्तो भक्तियोगोस्य सिद्धिदः।

इत्यादिवचनेभ्यः नैवं दुराचारिणापि दृढवैराग्यादिसाधनचतुष्टयसंपत्त्यभावेऽपि वेदान्तश्रवणाद्यनुष्ठितौ ज्ञानोत्पत्तिर्भवतीति क्वाप्युपलभ्यते। न च यथोक्ताधिकारसंपत्तिं विनानुष्ठितं साधनं किमपि फलाय कल्पते। तस्मात्सर्वथा सर्वैः कलौ श्रीहरिपादसेवनादि भक्तियोगाश्रवणमेव कर्तव्यमिति सिद्धम् ॥

ॐ

# परमेश्वरस्तुतिः ।

ॐ तत्सद्ब्रह्मणे नमः ॥—

शिवं नत्वा शिवां चापि शिवसूनुं पुनः पुनः ।
शिवं कुर्वन्तु सर्वेऽपि सर्वदा सदनुग्रहाः ॥ १ ॥

शंकरं परमानंदं सच्चिदानंदविग्रहं ।
नित्यं निरंजनं शंभुं नमामि जगदीश्वरं ॥ २ ॥

पुण्योहं पुण्यकर्माहं पुण्यात्मा पुण्यसंभवः ।
त्वमहं पुंडरीकाक्ष न भेदोऽस्ति कदाचन ॥ ३ ॥

देहबुद्ध्या तु दासोहं जीवबुद्ध्यात्वदंशकः ।
आत्मबुद्ध्यात्वमेवाहमिति मे निश्चला मति ॥ ४ ॥

यस्य प्रसादादहमेव विष्णुर्मय्येव सर्वं परिकल्पितं च ।
इत्थं विजा नामि सदात्मरूपं तस्यांघ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥५॥

यतो जातानि भूतानि जीवन्ति यदनुग्रहात् ।
यस्मिन्नेव लयं यान्ति तस्मै चिद्ब्रह्मणे नमः ॥ ६ ॥

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
यद्विभूतिर्जगत्सर्वं तस्मै चिद्ब्रह्मणेनमः ॥ ७ ॥

विदुर्यं न चित्तेंद्रियाणीन्द्रियेशं
विजानाति यस्तानि नित्यं नियंता ।
जगत्साक्षिणं व्यापकं विश्ववंद्यं
चिदानंदरूपं तमीशं प्रपद्ये ॥ ८ ॥

अणोरप्यणीयान्महद्भ्यो महीयान्
रवीन्दुग्रहज्या भगोलादि कर्त्ता ।
य ईशो हि सृष्ट्यादिमध्यान्तसंस्थ-
श्चिदानंदरूपं तमीशं प्रपद्ये ॥ ९ ॥

यतो जायते विश्वमेतत्समस्तं
स्थितं यत्र यस्मिंल्लयं याति काले ।
अनादिं विभुं आदिमध्यान्तशून्यं
चिदानंदरूपं तमीशं प्रपद्ये ॥ १० ॥

वशे यस्य विश्वं समस्तं सदास्ते
यदा भासतो भाति यद्वै विचित्रं

न जानंति यं तत्त्वतो योगिनोऽपि
चिदानंदरूपं तमीशं प्रपद्ये ॥ ११ ॥

ॐ सत्यं ज्ञानमनन्तं यन्निष्कलं निष्क्रियं परं
अद्वितीयं निर्विशेषं ब्रह्म तत्समुपास्महे ॥ १२ ॥

नित्यं निजानंदसदद्वितीयं शुद्धं विभुं सत्यमति स्वतंत्रम् ।
सूक्ष्मं निरस्ताखिल दृश्यमीशं प्रत्यञ्चमात्मानमहं भजामि ॥ १३।

अजं शाश्वतं कारणं कारणानां
शिवं केवलं भासकं भासकानाम् ।
तुरीयं तमःपारमाद्यन्तहीनं
प्रपद्ये परं पावनं द्वैतहीनम् ॥ १४॥

नमस्ते नमस्ते विभो विश्वमूर्ते
नमस्ते नमस्ते चिदानंदमूर्ते ।
नमस्ते नमस्ते तपोयोगगम्य
नमस्ते नमस्ते श्रुति ज्ञानगम्य ॥ १५ ॥

नमस्ते सते ते जगत्कारणाय
नमस्ते चिते सर्वलोकाश्रयाय ।

नमो द्वैततत्त्वाय मुक्तिप्रदाय
नमो ब्रह्मणे व्यापिने शाश्वताय ॥ १६ ॥

त्वमेकं शरण्यं त्वमेकं वरेण्यं
त्वमेकं जगत् पालकं स्वप्रकाशम् ।
त्वमेकं जगत्कर्तृपातृ प्रहर्तृ
त्वमेकं परं निश्चलं निर्विकल्पम् ॥ १७ ॥

भयानां भयं भीषणं भीषणानां
गतिः प्राणिनां पावनं पावनानाम् ।
महोच्चैः पदानां नियंतृत्वमेकं
परेषां परं रक्षणं रक्षणानाम् ॥ १८ ॥

वयं त्वां स्मरामो वयं त्वां भजामो
वयं त्वां जगत्साक्षिरूपं नमामः ।
सदेकं निधानं निरालंबमीशं
भवांभोधि पोतं शरण्यं व्रजामः ॥ १९ ॥

अच्युतं शाश्वतं निष्प्रपंचात्मकं
निर्गुणं निष्कलं निर्मलं व्यापकं ।
निष्क्रियं सच्चिदानंदरूपं शिवं
निर्द्वयं केवलं शुद्धदेवं भजे ॥ २० ॥

यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् ।
यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः ॥

सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ॥

यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः ।
तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥

यज्ञानानां तपसां चैव शुभानां चैव कर्मणाम् ।
वेद एव द्विजातीनां निःश्रेयसकरः परः ॥

स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः ।
अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥

बोधायनः । यथा कथंचिन्नित्यानि शक्त्यवस्थानुरूपतः ।
येनकेनापि कार्याणि नैव नित्यानि लोपयेत् ॥

बृहस्पतिः । केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः ।
युक्तिहीनविचारेण धर्महानिः प्रजायते ॥

पाराशरः । कल्पे कल्पे क्षयोत्पत्त्या ब्रह्मविष्णुमहेश्वराः ।

श्रुतिस्मृतिसदाचारा निर्णेतारश्च सर्वदा ॥
न कश्चिद्वेदकर्ता च वेदं स्मृत्वा चतुर्मुखः ।
तथैव धर्मान्स्मरति मनुः कल्पान्तरेऽन्तरे ॥
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे युगे ।
अन्ये कलियुगे नृणां युगरूपानुसारतः ॥
तपःपरं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥
कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः ।
द्वापरे शंखलिखिताः कलौ पाराशराः स्मृताः ॥
त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।
द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे ॥
कृते संभाषणादेव त्रेतायां स्पर्शनेन च ।
द्वापरे त्वन्नमादाय कलौ पतति कर्मणा ॥
कृते तात्कालिकः शापस्त्रेतायां दशभिर्दिनैः ।
द्वापरे त्वेकमासेन कलौ संवत्सरेण तु ॥
जितो धर्मो ह्यधर्मेण सत्यं चैवानृतेन च ।
जिताश्चोरैश्च राजानः स्त्रीभिश्च पुरुषाः कलौ ॥

सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति।
कुमार्यश्चप्रसूयंते अस्मिन्कलियुगे सदा॥
कृतेत्वस्थिगताः प्राणास्त्रेतायां मांसमाश्रिताः।
द्वापरे रुधिरं चैव कलौ त्वन्नादिषु स्थिताः॥

## उत्थानविधिः।

याज्ञवल्क्यः। ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम्।
धर्मार्थकामान्स्वे काले यथाशक्ति न हापयेत्॥
मनुः। ब्राह्मेमुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत्।
कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च॥
उत्थायावश्यकं कृत्वा कृतशौचः समाहितः।
पूर्वां संध्यां जपंस्तिष्ठेत्स्वकाले चापरां चिरम्॥
याज्ञवल्क्यः। शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः।
प्रातःसंध्यामुपासीत दन्तधावनपूर्वकम्॥
अंगिराः। उत्थाय पश्चिमे रात्रे तत आचम्य चोदकम्।
मुखशुद्ध्यर्थमादौ तु गण्डूषत्रितयं चरेत्॥
उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः।
परिजप्य च मंत्रेण भक्षयेद्दन्तधावनम्॥

# दन्तधावन विधिः

विष्णुः । कण्टकिक्षीरवृक्षोत्थं द्वादशांगुलसंमितम् ।
कनिष्ठिकाग्रवत्स्थूलं पूर्वार्धकृतकूर्चकम् ॥
दन्त धावनमुद्दिष्टं जिह्वोल्लेखनिका तथा ॥

गर्गः । अर्धशुष्कं त्वचाहीनं यत्नेन परिवर्जयेत् ।
पतितं चातिरिक्तं च कीटविद्धं तथैव च ॥

कात्यायनः । आयुर्बलं यशोवर्चः प्रजाः पशुवसूनि च ।
ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥

यमः । चतुर्दश्यष्टमीदर्शः पूर्णिमा संक्रमो रवेः ।
एषु स्त्रीतैलमांसानि दन्तकाष्ठं च वर्जयेत् ॥

श्राद्धे जन्मदिने चैव विवाहेऽजीर्णदोषतः ।
व्रते चैवोपवासे च वर्जयेद्दन्तधावनम् ॥

मनुः । दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ।
उच्छिष्टान्ननिषेकं च दूरादेव समाचरेत् ॥

मैत्रं प्रसाधनं स्नानं दन्त धावनमंजनम् ।
पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम् ॥

व्यासः। श्राद्धे यज्ञे च नियमान्नाद्यात् प्रोषितभर्तृका।
श्राद्धे कर्त्तुर्निषेधोऽयं न तु भोक्तुः कदाचन॥

अलाभेदन्तकाष्ठानां निषिद्धायां तथा तिथौ।
अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम्॥

## गंडूषविधिः।

आपस्तंवः। एवं शौचविधिं कृत्वा पश्चाद्गण्डूषमाचरेत्।
मूत्रे रेतसि विट्सर्गे दन्तधावनकर्मणि॥

भक्ष्याणां भक्षणे चैव क्रमाद्गण्डूषमाचरेत्।
चतुरष्टः द्विषट्—ऋष्ट गण्डूषैः षोडशैस्तथा॥

मुखशुद्धिं प्रकुर्वीत ह्यन्यथा दोषमाप्नुयात्।
पुरस्तादेवताः सर्वा दक्षिणे पितरस्तथा॥

पश्चिमे मुनिगन्धर्वा वामेगण्डूषमाचरेत्।
गण्डूषसमये विप्रस्तर्जन्या वक्त्रताडनम्॥

कुर्वीत यदि मूढात्मा रौरवंनरकं व्रजेत्।

# शौचविधिः ।

मनुयाज्ञवल्क्यौ । दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥

मनुः । छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथासुखमुखः कुर्यात्प्राणबाधा भयेषु च ॥

प्रत्यग्निं प्रतिसूर्यं च प्रतिसोमोदकं द्विजान् ।
प्रतिगां प्रतिवातं च प्रज्ञा नश्यति मेहतः ॥

देवलः । आशौचान्तं मृजेच्छिश्नं प्रस्रावोच्चारयोरपि ।
गुदं हस्तं च निर्मृज्यान्मृदम्भोभिर्मुहुर्मुहुः ॥

नवेगंधारयेत् । नोपरुद्धः क्रियांकुर्यात् ।
हारितः । आहारं तु रहः कुर्यात् विहारं चैव सर्वदा ।
गुप्ताभ्यां लक्ष्म्युपेतः स्यात् प्रकाशे हीयते श्रिया ॥

मनुः । विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्यादेयमर्थवत् ।
दैहिकानां मलानां च शुद्धिषु द्वादशस्वपि ॥

वसाशुक्रमसृङ्मज्जमूत्राविट्घ्राणकर्णविट् ।

श्लेष्माश्रुदूषिकास्वेदा द्वादशैते नृणां मलाः ॥

एकालिङ्गे गुदे तिस्रस्तथैकत्रकरे दश ।
उभयोः सप्तदातव्या मृदःशुद्धिमभीप्सता ॥

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं स्याद्वनस्थानां यतीनां तु चतुर्गुणम् ॥

ऊर्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः ।
यान्यधस्तान्यमेध्यानि देहाच्चैव मलाश्च्युताः ॥

कृत्वामूत्रं पुरीषं वा खान्याचान्त उपस्पृशेत् ।
वेदमध्येष्यमाणश्च अन्नमश्नंश्च सर्वदा ॥

मनुदेवलौ । यावत्तु शुद्धिं मन्येत तावच्छौचं विधीयते ।
प्रमाणं शौचसङ्ख्यायां न विप्रैरुपदिश्यते ॥

यस्मिन् देशे तु यत्तोयं या च यत्रैव मृत्तिका ।
सैव तत्र प्रशस्ता स्यात् तया शौचं विधीयते ॥

आदित्य पुराणे । स्त्री शूद्रयोरर्द्धमानं प्रोक्तं शौचं मनीषिभिः ।
दिवाशौचस्य निश्यर्द्धं पथिपादं विधीयते ॥
आर्तः कुर्याद्यथाशक्ति शक्तः कुर्याद्यथोदितम् ।

बोधायनः। देशंकालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम्।
उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत्॥

दक्षः। न्युनाधिकं न कर्तव्यं शौचं शुद्धिमभीप्सता।
प्रायश्चित्तेन पूयेत विहितातिक्रमे कृते॥

शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः॥

व्याघ्रपादः। शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यंतरं तथा।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम्॥
गंगातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः॥
आमृत्योश्चाचरन् शौचं भावदुष्टो न शुद्ध्यति॥

# स्नानविधिः।

याज्ञवल्क्यः। गुणादशस्नानपरस्य साधो रूपं च तेजश्च बलं च शौचम्।
आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्ननाशश्च यशश्च मेधा॥
अस्नात्वा नाचरेत्कर्म जपहोमादिकं तथा।
लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान्॥

खिद्यन्ते हि सुपुप्तस्य इन्द्रियाणि स्रवन्ति च ।
अंगानि समतां यान्ति चोत्तमान्यधमैः सह ॥

योगियाज्ञवल्क्यः । स्नानमूलाः क्रियाः सर्वाः स्मृतिश्रुत्युदिता-नृणाम् ।
तस्मात्स्नानं निषेवेत श्रीपुष्ट्याऽरोग्यवर्धनम् ॥

पाराशरः । स्नानानि पञ्चपुण्यानि कीर्तितानि मनीषिभिः ।
आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च ॥
आग्नेयं भस्मना स्नानमवगाह्य तु वारुणम् ।
आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् ॥
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
तत्र स्नात्वा तु गंगायां स्नातो भवति मानवः ॥
स्नातुं यान्तं द्विजं सर्वे देवाः पितृगणैः सह ।
वायुभूतास्तु गच्छन्ति तृषार्ताः सलिलार्थिनः ॥
निराशास्ते निवर्तन्ते वस्त्रनिष्पीडने कृते ।
तस्मान्न पीडयेद्वस्त्रमकृत्वा पितृतर्पणम् ॥
रोमकूपेष्ववस्थाप्य तिलैस्तर्पयते पितॄन् ।
तर्पितास्तेन ते सर्वे रुधिरेण मलेन च ॥

अवधूनोति यः केशान्स्नात्वा प्रस्रवते द्विजः ।
आचामेद्वाजलस्थोऽपि स बाह्यः पितृदेवतैः ॥

भास्करस्य करैः पूतं दिवा स्नानं प्रशस्यते ।
अप्रशस्तं निशि स्नानं राहोरन्यत्रदर्शनात् ॥

महानिशा तु विज्ञेया मध्यस्थप्रहरद्वयम् ।
प्रदोषपश्चिमौ यामौ दिनवत्स्नानमाचरेत् ॥

चैत्यवृक्षश्चितिर्यूपश्चांडालः सोमविक्रयी ।
एतांस्तु ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् ॥

अस्थिसंचयनात्पूर्वं रुदित्वा स्नानमाचरेत् ।
अन्तर्दशाहे विप्रस्य ह्यूर्ध्वमाचमनं स्मृतम् ॥

सर्वं गंगासमं तोयं राहुग्रस्ते दिवाकरे ।
होमग्रहे तथैवोक्तं स्नानदानादिकर्मसु ॥

कुशपूतं तु यत्स्नानं कुशेनोपस्पृशेद्द्विजः ।
कुशेनोद्धृततोयं यत्सोमपानसमं भवेत् ॥

शंखः । स्नानं तु द्विविधं प्रोक्तं गौणं मुख्यं प्रभेदतः ।
तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधं भवेत् ॥

अग्निपुराणे। नित्यं नैमित्तिकं काम्यं क्रियाऽङ्गं मलकर्षणम्।
क्रियास्नानं तथा षष्ठं षोढास्नानं प्रकीर्त्तितम्॥

शंखः। अस्नातश्च पुमान्नार्हो जपाग्निहवनादिषु।
प्रातःस्नानं तदर्थं तु नित्यस्नानं प्रकीर्त्तितम्॥

चण्डालशवयूपांश्च स्पृष्ट्वाऽस्नातां रजस्वलां।
स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हितत्॥

पुष्यस्नानादिकं यत्तद्दैवज्ञविधिचोदितम्॥
तद्धि काम्यं समुद्दिष्टं नाकामस्तत् प्रयोजयेत्॥

जप्तुकामः पवित्राणि अर्चिष्यन् देवताः पितॄन्।
स्नानं समाचरेद्यस्तु क्रियाऽङ्गं तत्प्रकीर्त्तितम्॥

मलापकर्षणं नामस्नानमभ्यंगपूर्वकम्।
मलापकर्षणार्थाय प्रवृत्तिस्तस्यनान्यथा॥

सरःसु देवखातेषु तीर्थेषु च नदीषु च।
क्रियास्नानं समुद्दिष्टं स्नानं तत्र मता क्रिया॥

व्यासः। स्नानं मध्यन्दिने कुर्यात् सुजीर्णेऽन्ने निरामयः।
न भुक्त्वाऽलंकृतो रोगी नाज्ञातेऽम्भसि नाकुलः॥

'धर्मं क्रियां कर्तुमनाः पूर्वं स्नानं समाचरेत् ।
क्रियाऽङ्गं तत्समुद्दिष्टं स्नानं वेदपरैर्द्विजैः' ॥

दक्षः । प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः ।
यतेस्त्रिषवणं प्रोक्तं सकृत्तु ब्रह्मचारिणः ॥

याज्ञवल्क्यः । उदक्या स्मृतिभिः स्नायात् संस्पृष्टस्तैरुपस्पृशेत् ।
अब्लिंगानि जपेच्चैव गायत्रीं मनसा सकृत् ।

योगियाज्ञवल्क्यः । तूष्णीमेवावगाहेत यदा स्यादशुचिर्नरः ।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत् ॥

घृतं च सार्षपं तैलं यत्तैलं पुष्प वासितम् ।
न दोषः पक्वतैलेषु स्नानाभ्यंगेषु नित्यशः ॥

नित्यं नैमित्तिकं चैव क्रियागं मलकर्षणम् ।
तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः ॥

याज्ञवल्क्यः । पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिषु ।
स्नायान्नदीदेवखातहृदप्रस्रावणेषु च ॥

शंखः । प्रपद्ये वरुणं देवमम्भसां पतिमीश्वरं ।
शमयन्त्वाशु मे पापं रक्षन्तु च सदैव माम् ॥

विष्णुः । ततोऽप्सु निमग्नस्त्रिरघमर्षणं जपेत् ।
तद्विष्णोः परमं पदमिति वा द्रुपदां सावित्रीं वा ।
युञ्जते नम इत्यनुवाकं वा । पुरुषसूक्तं वा ।
स्नातश्चार्द्रवासा देवर्षिपितृतर्पणमम्भस्थ एव कुर्यात् ॥

मनुः । दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा ।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुद्ध्यति ॥

याज्ञवल्क्यः । वृथा तूष्णोदकस्नानं वृथाजप्यमवैदिकम् ।
वृथा त्वश्रोत्रिये दानं वृथा भुक्तमसाक्षिकम् ॥
त्रिभिः सारस्वतं तोयं सप्ताहे न च या मुनम् ।
सद्यः पुनाति गांगेयं दर्शनादेव नार्मदम् ॥

कात्यायनबोधायनौ । सदोपवीतिना भाव्यं सदाबद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥

गार्ग्यः । कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च ।
नित्यं याद्दच्छिकं चैव यथारुचि समाचरेत् ॥

यमः । आप एव सदा पूतास्तासांवन्हिर्विशोधकः ।
तस्मात्सर्वेषु कालेषु उष्णाम्भः पावनं स्मृतम् ॥

याज्ञवल्क्यः। प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकृतं हितत् ।
सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥

अत्यंतमलिनकायो नवछिद्रसमन्वितः ।
स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम् ॥

बोधायनः। गृहस्नानेन तु प्रोक्तं मार्जनं तर्पणादिकम् ।
नान्तराचमनं प्रोक्तं पश्चादाचम्य शुद्ध्यति ॥

कात्यायनः। यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
दन्तान् प्रक्षाल्य नद्यादौ गृहे च तदमन्त्रवत् ॥

स्नाने दाने जपे होमे संध्यायां देवतार्चने ।
शिखाग्रन्थिं विना कर्म न कुर्याद्वै कदाचन ॥

शौचेऽथ शयने संगे भोजने दन्तधावने ।
शिखा मुक्तिं सदा कुर्यादित्येतन्मनुरब्रवीत् ॥

कात्यायनः। यच्च द्वयं श्रावणादिसर्वानद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥

धनुः सहस्राण्यष्टौ तु गतिर्यासां न विद्यते ।
नता नदीः शब्दवहा गर्तान्ताः परिकीर्तिताः ॥

उपकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥

धन्वन्तरिः । तृणपर्णोत्करयुतं कलुषं विषसंयुतम् ।
योऽवगाहेत वर्षासु पिबेद्वापिनवं जलम् ॥

स वाह्याभ्यन्तरान्रोगान् प्राप्नुयात्क्षिप्रमेव हि ॥

वाचस्पतौ । स्नानमाचमनं दानं देवतापितृतर्पणम् ।
शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः ॥

सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः ।
सर्वभूतदया तीर्थं सर्वत्रार्जवमेव च ॥

दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते ।
ब्रह्मचर्यं परं तीर्थं तीर्थं च प्रियवादिता ॥

ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम् ।
तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा ॥

एतत्ते कथितं देवि मानसं तीर्थलक्षणम् ।
यस्य हस्तौ च पादौ च मनश्चैव सुसंयुतम् ॥

विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥

मनो विशुद्धं पुरुषस्य तीर्थं वाचां यमस्त्विन्द्रियनिग्रहस्तपः।
एतानि तीर्थानि शरीरजानि स्वर्गस्य मार्गं प्रतिबोधयन्ति॥

याज्ञवल्क्यः । शतेन गायत्र्या स्नायात् शतमन्तर्जले जपेत् ।
आपः शतेन पीत्वा तु सर्वपापैः प्रमुच्यते ॥

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
पवित्राणान्तथाजप्ये दाने च विधिचोदिते ।

छांदोगपरिशिष्टे । अल्पत्वाद्धोमकालस्य महत्वात्स्नानकर्मणः।
प्रातर्न तनुयात्स्नानं होमलोपोविगर्हित ॥

कात्यायनः । यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
दन्तान्प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत् ॥

योगियाज्ञवल्क्यः । ब्राह्मणक्षत्रियविशां स्नानं मंत्रवदिष्यते ।
तूष्णीमेव तु शूद्रस्य सनमस्कारकं स्मृतम् ॥

बोधायनश्च । अम्भोऽवगाहनं स्नानं विहितं सार्ववर्णिकम्।
मन्त्रवत्प्रोक्षणं वाऽपि द्विजादीनां विशिष्यते ।

मनुः । न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि ।
न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ॥

# वस्त्रधारणविधिः।

मत्स्यपुराणे। एवं स्नात्वा ततः पश्चादाचम्य च विधानतः।
उत्थाय वाससी शुक्ले शुद्धे तु परिधाय च ॥

देवलः। स्वयं धौतेन कर्त्तव्या क्रिया धर्म्या विपश्चिताः।
न तु नेजकधौतेन नाहतेन न कुत्रचित् ॥

ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्।
अहतं तद्विजानीयात् सर्व्वकर्मसु पावनम् ॥

भृगुः। विकच्छोऽनुत्तरीयश्च नग्नश्चाऽवस्त्र एव च।
श्रौतं स्मार्त्तं तथा कर्म न नग्नश्चिन्तयेदपि ॥

नग्नो मलिनवस्त्रः स्यान्नग्नश्चार्द्रपटः स्मृतः।
नग्नस्तु दग्धवस्त्रः स्यान्नग्नः स्यूतपटस्तथा ॥

योगियाज्ञवल्क्यः। स्नात्वैवं वाससी धौते अच्छिन्ने परिधाय च।
अलाभे धौतवस्त्रस्य शाणक्षौमाविकानि च।
कुतपं योगपट्टं च विवासास्तु न वै भवेत् ॥
कार्पासं कटिनिर्मुक्तं कौशेयं भोजनावधि।

तृणवस्त्रं सदाशुद्धं ऊर्णावातेन शुध्यति ॥

रेतस्पर्शाच्छवस्पर्शात्स्पर्शान्मूत्रपुरीषयोः ।
रजस्वलादिसंस्पर्शादूर्णोवातान्न शुध्यति ॥

त्वक्फलोदररोमाणि भवन्ति वस्त्रजातयः ।
प्रोक्षणात् क्षालनात् वातात् झटितेन विशुध्यति ॥

# आचमनविधिः ।

वृद्धपराशरः । कृत्वाऽथशौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः ।
निबद्धशिखकच्छस्तु द्विज आचमनं चरेत् ।
कृत्वोपवीतं सव्यं वाग्मनःकायसंयतः ॥

मनुयाज्ञवल्क्यौ ।अन्तर्जानुः शुचौ देश उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्यच ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥

त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ।
अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥

हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ।
शुध्येरंस्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥

बृहस्पतिः । अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसंभवे ।
मार्जारमूषकस्पर्शे प्रहासेऽनृतभाषणे ।
निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नपि स्पृशेत् ॥

मार्कण्डेयपुराणे। सम्यगाचम्य तोयेन क्रियाः कुर्वीत वै शुचिः ।
देवतानामृषिणां च पितॄणां चैव यत्नतः ॥

कुर्यादाचमनं स्पर्शं गोपृष्ठस्यऽर्कदर्शनम् ।
कुर्वीतालम्भनं चापि दक्षिणश्रवणस्य वा ॥

यथा विभवतो ह्येतत् पूर्वाभावे ततः परम् ।
न विद्यमाने पूर्वोक्ते उत्तरप्राप्तिरिष्यते ॥

बोधायन । नीवीं विसृज्य परिधानाय उपस्पृशेत् ।
आर्द्रं तृणं गोमयं भूमिं वा समुपस्पृशेत् ॥

होमे भोजनकाले च सन्ध्ययोरुभयोरपि।
आचान्तः पुनराचामेज्जपहोमार्चनादिषु ॥

भोजने हवने दाने उपहारे प्रतिग्रहे ।

हविर्भक्षणकाले च तत् द्विराचमनं स्मृतम् ॥

पाराशरयाज्ञवल्क्यौ। स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे।
आचान्तः पुनराचामेद्वासो विपरिधाय च ॥
मुखजाविप्रुषोमेध्यास्तथाऽऽचमनबिन्दवः ।
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥

यमः । अपः करनखस्पृष्टाय आचामति वै द्विजः ।
सुरां पिबति स व्यक्तं यमस्य वचनं यथा ॥

बोधायनः । पादप्रक्षालनोच्छेषेण नाचामेत् । यद्याचामेत् भूमौ स्रावयित्वाऽऽचामेत् । नांगुलीभिर्न सबुद्बुदाभिर्न सफेनाभिर्नोष्णाभिर्न क्षाराभिर्न विवर्णाभिर्न दुर्गन्धरसाभिर्न कलुषाभिः । न हसन् न जल्पन् न तिष्ठन् न विलोकयन् न प्रह्वो न प्रणतो न मुक्तशिखो न प्रावृतकंठो न वेष्टितशिरा न बद्धकक्ष्यो न बहिर्जानुः न त्वरमाणो नाऽयज्ञोपवीती न प्रसारितपादः शब्दमकुर्वन् त्रिरपो हृदयंगमाः पिबेत् ।

गोभिल । उभयत्रस्थितैर्दर्भैः समाचामति यो द्विजः ।
सोमपानफलं सस्यभुक्त्वा यज्ञफलं भवेत् ॥

हारितः । आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् ।

शुष्कवासा स्थले कुर्यात्तर्पणाचमनं जपम् ॥
करपात्रे च यत्तोयं यत्तोयं ताम्रभाजने ।
सौवर्णे राजते चैव नैवाऽशुद्धं तु तत् स्मृतम् ॥

एवं यो ब्राह्मणो नित्यमुपस्पर्शनमाचरेत् ।
ब्रह्मादिस्तम्बपर्यन्तं जगत् स परितर्पयेत् ॥

यः क्रियाःकुरुते मोहादनाचम्यै व नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः ॥

पाराशरः। क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते ।
पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत् ॥
अग्निरापश्च वेदाश्च सोमसूर्यानिलास्तथा ।
सर्व एव तु विप्रस्य श्रोत्रे तिष्ठन्ति दक्षिणे ॥
शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ।
विना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्भवेत् ॥
जले स्थलस्थो नाचामेज्जलस्थश्च वहिः स्थले ।
उभे स्पृष्ट्वा समाचामेदुभयत्र शुचिर्भवेत् ॥

द्राक्षादीनि फलानीक्षून् पयो मूलं घृतं दधि ।
ताम्बूलमौषधं पत्रं हविर्भुक्त्वापि नाचमेत् ॥

# भस्मधारणविधिः ।

बृहज्जाबालो—उ. ब्रा. १.

श्रुतिः । विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनो भवन्ति पञ्चनामानि । पञ्चभिर्नामभिर्भृशमैश्वर्यकारणाद्भूतिः ।

भस्म सर्वाघभक्षणात् । भासनाद्भसितम् । क्षारणादापदां क्षारम् । भूतप्रेतपिशाचब्रह्मराक्षसापस्मारभवभीतिभ्योऽभिरक्षणाद्रक्षेति ।

सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम् ।
स्त्रियं नपुंसकं गृध्रं बिलाडं बक मूषिकम् ।

स्पृष्ट्वा तथा विधानन्यान्भस्मस्नानं समाचरेत् ॥
देवाग्निगुरुवृद्धानां समीपेऽन्त्यजदर्शने ।

अशुद्धभूतले मार्गे कुर्यान्नोद्धूलनं व्रती ॥
शंखतोयेन मूलेन भस्मना मिश्रणं भवेत् ॥

योजितं चन्दने नैव वारिणा भस्मसंयुतम् ।
चन्दने न समालिम्पेज्ज्ञानदं चूर्णमेव तत् ॥

मध्याह्नात्प्राग्जलैर्युक्तं तोयं तदनुवर्जयेत् ।
त्रिपुण्ड्रं कारयेत्पश्चाद्ब्रह्मविष्णुशिवात्मकं ॥

मध्यांगुलिभिरादाय तिसृभिर्मूलमन्त्रतः ।
अनामामध्यमांगुष्ठैरथवास्यात्त्रिपुण्ड्रकम् ॥

ये भस्मधारणं त्यक्त्वा कर्म कुर्वन्ति मानवाः ।
तेषां नास्ति विनिर्मोक्षः संसाराज्जन्मकोटिभिः ॥

महापातकयुक्तानां पूर्वजन्मार्जितागसाम् ।
त्रिपुंड्रोद्धूलनाद्द्वेषो जायते सुदृढं बुधाः ॥

येषां कोपो भवेद्भूयँल्ललाटे भस्मदर्शनात् ।
तेषामुत्पत्तिसांकर्यमनुमेयं विपश्चिता ॥

येषां नास्ति मुने श्रद्धा श्रौते भस्मनि सर्वदा ।
गर्भाधानादिसंस्कारस्तेषां नास्तीति निश्चयः ॥

ये भस्मधारिणं दृष्ट्वा नराः कुर्वन्ति ताडनम् ।
तेषां चण्डालतो जन्म ब्रह्मन्नूह्यं विपश्चिता ॥

धिग्भस्मरहितं फालं धिग्ग्राममशिवालयम्।
धिगनीशार्चनं जन्म धिग्विद्यामशिवाश्रयाम्॥

रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्तितम्।
तस्मात्सर्वेषु कालेषु वीर्यवान्भस्मसंयुतः॥

अथ कालाग्निरुद्रोपनिषदि। अथ सनत्कुमारः प्रपच्छ प्रमाणमस्य त्रिपुण्ड्रधारणस्य। त्रिधा रेखा भवत्या ललाटादाचक्षुषोरामूर्ध्नोराभ्रुवोर्मध्यतश्च। यास्य प्रथमा रेखा सा गार्हपत्यश्चाकारो रजो भूर्लोकः स्वात्मा क्रियाशक्तिर्ऋग्वेदः प्रातःसवनं महेश्वरो देवतेति। यास्य द्वितीया रेखा सा दक्षिणाग्निरुकारः सत्त्वमन्तरिक्षमन्तरात्मा चेच्छाशक्तिर्यजुर्वेदो माध्यंदिनं सवनं सदाशिवो देवतेति। यास्य तृतिया रेखा सा हवनीयो मकारस्तमो द्यौर्लोकः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयसवनं महादेवो देवतेति। एवं त्रिपुण्ड्रविधिं भस्मना करोति यो विद्वान्ब्रह्मचारी गृही वानप्रस्थो यतिर्वा स महापातकोपपातकेभ्यः पूतो भवति। स सर्वेषु तीर्थेषु स्नातो भवति स सर्वान्वेदानधीतो भवति स सर्वान्देवाञ्ज्ञातो भवति स सततं सकलरुद्रमन्त्रजापी भवति स

सकलभोगान्भुङ्क्ते देहं त्यक्त्वा शिवसायुज्यमेति न स पुनरावर्तते न स पुनरावर्तत इत्याह भगवान्कालाग्निरुद्रः ॥ भस्मजाबालोपनिषदि। एतत्प्रातर्मध्याह्नसायाह्नेषु त्रिकालेषु विधिवद्भस्मधारणमप्रमादेन कार्यम् । प्रमादात्पतितो भवति । ब्राह्मणानामयमेव धर्मोऽयमेव धर्मः । एवं भस्मधारणमकृत्वानाश्नीयाद्दापोऽन्नमन्यद्वा । प्रमादात्त्यक्त्वा भस्मधारणं न गायत्रीं जपेत् । न जुहुयादग्नौ तर्पयेद्देवानृषीन्पित्रादीन् । अयमेव धर्मः सनातनः सर्वपापनाशको मोक्षहेतुः । नित्योऽयं धर्मो ब्राह्मणानां ब्रह्मचारिगृहीवानप्रस्थयतीनाम् । एतदकरणे पतत्येवैति ब्राह्मणः । अकृत्वाप्रमादेनैतदष्टोत्तरशतं जलमध्ये स्थित्वा गायत्रीं जप्त्वोपोषणेनैकेन शुद्धो भवति । यतिर्भस्मधारणं त्यक्त्वैकदोपोष्य द्वादशसहस्रं प्रणवं जप्त्वा शुद्धो भवति । अन्यथेन्द्रो यतीन्त्सालावृकेभ्यः पातयति । त्रिकालमेतत्प्रयुञ्जानः सर्ववेदपारायणफलमवाप्नोति । सर्वतीर्थफलमश्नुते ॥

# रुद्राक्षधारणाविधिः।

बृहज्जाबालोपनिषदि।

तस्मिन्समये निदाघजडभरतदत्तात्रेयकात्यायनभरद्वाज कपिलवशिष्ठपिप्पलाश्च कालाग्निरुद्रं परिसमेत्योचुः।

श्रुतिः। अथ कालाग्निरुद्रं भगवन्तं सन्तकुमारः पप्रच्छाधीहिभगवन्रुद्राक्षधारणविधिं। स होवाच। रुद्रस्य नयनादुत्पन्ना रुद्राक्षा तस्माद्रुद्राक्षत्वमिति। तद्रुद्राक्षे शिरसि धार्यमाणे कोटिगोप्रदानफलं भवति। एतेषां स्थानानां कर्णयोः फलं वक्तुं न शक्यमिति होवाच। मूर्ध्नि च त्वारिंशच्छिखायामेकं त्रयं वा श्रोत्रयो द्वादश कण्ठे द्वात्रिंशद्‌ षड्त्रिंशद्वा बाह्वोः षोडशषोडश द्वादशद्वादश मणिबन्धयोः षट्षडङ्गुष्ठयोस्ततः संध्यां सकुशोऽहरहरुपासीत।

श्रुतिः। एवमक्षमालिकया जप्तो मन्त्रः सद्यः सिद्धि करोभवतीत्याहभगवान्गुहः प्रजापतिमिति॥

रुद्राक्षजाबालोपनिषदि। दिव्यवर्षसहस्राणी चक्षुरुन्मीलितं मया।
भूमावक्षिपुटाभ्यां तु पतिताजलबिन्दवः॥

तत्राश्रुबिन्दवो जाता महारुद्राक्षवृक्षकाः ।
स्थावरत्वमनुप्राप्य भक्तानुग्रहकारणात् ॥
भक्तानां धारणात्पापं दिवारात्रिकृतं हरेत् ।
लक्षं तु दर्शनात्पुण्यं कोटिस्तद्धारणाद्भवेत् ॥
तस्य कोटिशतं पुण्यं लभते धारणान्नरः ।
लक्षकोटि सहस्राणि लक्षकोटि शतानि च ॥
तज्जपाल्लभते पुण्यं नरो रुद्राक्षधारणात् ।
धात्रीफलप्रमाणं तु मध्यमं प्रोच्यते बुधैः ।
अधमं चणमात्रं स्यात्प्रक्रियैषा मयोच्यते ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति शिवाज्ञया ।
वृक्षाजाताः पृथिव्यां तु तज्जातीयाः शुभाक्षकाः ॥
श्वेतास्तु ब्राह्मणा ज्ञेयाः क्षत्रिया रक्तवर्णकाः ।
पीतास्तु वैश्या विज्ञेयाः कृष्णाः शूद्रा उदाहृताः ॥
ब्राह्मणो बिभृयाच्छ्वेतान्रक्तान्राजा तु धारयेत् ।
पीतान्वैश्यस्तु बिभृयात्कृष्णाञ्छूद्रस्तु धारयेत् ॥

समाः स्निग्धा दृढाः स्थूलाः कण्टकैः संयुताः शुभाः ।
कृमिदुष्टं भिन्नभिन्नं कण्टकैर्हीनमेव च ॥

व्रणयुक्तमयुक्तं च षड्रुद्राक्षाणि वर्जयेत् ।
स्वयमेव कृतं द्वारं रुद्राक्षं स्यादिहोत्तमम् ॥

यत्तु पौरुषयत्नेन कृतं तन्मध्यमं भवेत् ।
समान्स्निग्धान्दृढान्स्थूलान्क्षौमसूत्रेण धारयेत् ॥

सर्वगात्रेण सौम्येन सामान्यानि विचक्षणः ।
निकषेहेमरेखाभा यस्यरेखा प्रदृश्यते ॥

तदक्षमुत्तमं विद्यात्तद्धार्यं शिवपूजकैः ।
एकमुखादारभ्य चतुर्दशमुखपर्यन्तरुद्राक्षभेदाः सन्ति ॥

ग्रहणे विषुवे चैव मयनेसंक्रमेऽपि च ।
दर्शेषु पूर्णमासे च पूर्णेषु दिवसेषु च ।
रुद्राक्षधारणात्सद्यः सर्वपापैः प्रमुच्यते ॥

रुद्राक्षमूलं तद्ब्रह्मा तन्नालं विष्णुरेव च ।
तन्मुखं रुद्र इत्याहुस्तद्बिन्दुः सर्वदेवताः ॥

# प्राणायामादिविधिः ।

प्रागग्रेषु ततः स्थित्वा दर्भेषु सुसमाहितः ।
प्राणायामत्रयं कृत्वा ध्यायेत् संध्यामिति श्रुतिः ॥

मनुयाज्ञवल्क्यौ । गायत्रीं शिरसासार्धं जपेद्व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥

योगियाज्ञवल्क्यः । पूरकः कुम्भको रेचकः प्राणायामस्त्रिलक्षणः ।

नासिकाऽऽकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते ।
कुम्भको निश्चलः श्वासो रेच्यमानस्तु रेचकः ॥

कात्यायनः । दक्षिणे रेचयेद्वायुं वामेनापूरितोदरम् ।
कुंभकेन जपं कुर्यात्प्राणायामो भवेदिति ॥

यथापर्वतधातूनां दोषान् हरति पावकः ।
एवमन्तर्गतं पापं प्राणायामेन दह्यते ॥

प्रजापतिः । ऋगन्ते मार्जनं कुर्यात् पादान्ते वा समाहितः ।
अर्द्धर्चान्तेऽथवा कुर्याच्छिष्टानां मतमीदृशम् ॥

भारद्वाजः । सायमग्निश्च मेत्युक्त्वा प्रातः सूर्येत्यपः पिबेत् ।

आपः पुन्तु मध्याह्ने ततश्चाऽऽचमनं चरेत् ॥

कात्यायनः । शिरसोर्जनं कुर्यात् कुशैः सोदकविन्दुभिः ।
प्रणवो भूर्भुवः स्वर्द्वौ गायत्री च तृतीयिका ॥
अब्दैवत ऋचश्चैव चतुर्थमिति मार्जनम् ।

प्रजापतिः । जलपूर्णं तथा हस्तं नासिकाग्रे समर्पयेत् ।
द्रुपदात्तु पठित्वा च तज्जलं तु क्षितौ क्षिपेत् ॥
पंचांगुलीभिर्नासाग्रं पीडयेत्प्रणवेन वै ।
मुद्रेयं सर्वपापघ्नी वानप्रस्थगृहस्थयोः ॥
कनिष्ठानाभिकांगुष्ठैर्यतेश्च ब्रह्मचारिणः ॥

कात्यायनः । उत्थायार्कं प्रतिप्रोहेत् त्रिकेणाञ्जलिमम्भसाम् ।

श्रुतिः । यत् प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधुन्वन्ति ।
उपस्थानं स्वकैर्मन्त्रैरादित्यस्य तु कारयेत् ।

दक्षः । अभ्यर्द्धयामाद्या सायं सन्ध्या माध्याह्निकीष्यते ।

शंखः । प्रातः सन्ध्यां सनक्षत्रां मध्यमां स्नानकर्मणि ।
सादित्यां पश्चिमां सन्ध्यामुपासीत यथाविधि ॥

मरीचिः। सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते।

पैठीनसिः। सूतके सावित्र्या चाञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्यात्॥

याज्ञवल्क्यः। स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः।
सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहंजपः॥

मनुयाज्ञवल्क्यौ। प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु।
जपन्नासीत सावित्रीं प्रत्यगातारकोदयात्॥
संध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात्।
अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपि॥

योगियाज्ञवल्क्यः। ओंकारो व्याहृतश्चैव गायत्री सशिरा तथा।
आपोहिष्ठाऋचतिस्त्रः सूक्तमेवाघमर्षणम्॥
आदित्यरक्षणार्थं तु सायंप्रातर्दिनेदिने।
सृष्टाः स्वयंभुवा पूर्वं ब्रह्मणस्तन्मुखं स्मृतम्॥
अर्धर्चया क्षिपेदूर्ध्वमर्धर्चया क्षिपेदधः।
अधोभागे विसृष्टाभिरसुरा यान्ति संक्षयम्॥
सर्वतीर्थाभिषेकं च ऊर्ध्वसंमार्जनाद्भवेत्।

छंदोगपरिशिष्टे । रक्षार्थं वारिणात्मानं परिक्षिप्य समन्ततः ।
शिरसो मार्जनं कुर्यात्कुशैः सोदकविन्दुभिः ॥

योगियाज्ञवल्क्यः । द्रुपदानाम सा देवी यजुर्वेदे प्रतिष्ठिता ।
अन्तर्जले त्रिरावर्त्य मुच्यते ब्रह्महत्यया ॥

हारितः । शुम्बकानाम गायत्री वेदे वा जसनेयके ।
अन्तर्जले सकृज्जप्ता ब्रह्महत्यां व्यपोहति ॥

उच्चारे मैथुने चैव प्रस्रावे दन्तधावने ।
श्राद्धे भोजनकाले च षट्सु मौनं समाचरेत् ॥

अंगीराः । सन्ध्ययोरुभयोर्जाप्ये भोजने दन्तधावने ।
पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः ।
गुरूणां सन्निधौ दाने योगे चैव विशेषतः ।
एतेषु मौनमातिष्ठन्स्वर्गं प्राप्नोति मानवः ॥

संध्याविधिः श्रुतिः अहरहः संध्यामुपासीत ॥
तस्माद्ब्राह्मणोऽहोरात्रस्य योगे संध्यामुपासीत ।

षडविंशब्राह्मणप्रपाठक ४ खंड ५

( सांख्यायनगृह्ये )

अरण्ये समित्पाणिः संध्यामुपास्ते नित्यं वाग्यतः उत्तरपराभिमुखोन्वष्टमदिशमानक्षत्रदर्शनात् ।

अतिक्रान्तायां महाव्याहृतीः स्वस्त्ययनान्यपि जप्त्वा एवम् प्रातः प्राङ्मुखतिष्ठन्नामंडलदर्शनात् ॥

( आश्वलायनगृह्यपरिशिष्टे )

अथ संध्यामुपासीतेत्याचार्य्यौ यावदहोरात्रयोः संधीयश्च-पूर्वाह्णापराह्णयोस्तत्कालभवा देवता सन्ध्या तामुपासीत ॥

स ज्योतिष्या ज्योतिषोदर्शनात्सोस्याः कालः सा संध्या तत्संध्यायाः संध्यात्वम् ।

याज्ञवल्क्यः—जपन्नासीत सावित्रीम्प्रत्यगातारकोदयात् ।
संध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥ १ ॥

प्रमाणमंडनः—मुख्यकाले यदाऽवश्यं कर्म कर्त्तुं न शक्यते ।
गौणकालेपि कर्त्तव्यम् गौणोप्यत्रे दशो भवेत् ॥ २ ॥

उदयास्तमयादूर्ध्वं यावत्स्याद् घटिकात्रयम् ।

तावत्संध्यामुपासीत प्रायश्चित्तमतःपरम् ॥ २ ॥

बृहन्नारदीये । दिवोदितानि कर्माणि प्रमादादकृतानि चेत् ।
यामिन्याः प्रहरं यावत्तावत्सर्वाणि कारयेत् ।

(गोभिलीयगृह्ये) अथ य इमां सन्ध्यां नोपास्ते नाचष्टे न स जयति ये तूपासते श्रोत्रिया भवन्तीत्युपनीता छेदनभेदनभोजनमैथुनस्वपनस्वाध्यायानाचरन्ति ये संध्याकाले ते श्वशूकरशृगालगर्दभसर्पयोनिष्वभिसम्पद्यमानास्तमोभिस्सम्पद्यन्ते तस्मात्सायं प्रातः सन्ध्यामुपासीत ।

मनुः—नानुतिष्ठति यःपूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥ १ ॥

मरीचिः—संध्या येन न विज्ञाता संध्या येनानुपासिता ।
जीवमानो भवेच्छूद्रो मृतः श्वा चाऽभिजायते ॥ २ ॥

दक्षः—सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलभाग् भवेत् ॥ ३ ॥

वसिष्ठः—संध्याहीनस्तु यो विप्रो ह्यन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ ४ ॥

हारितः—तस्मान्न लंघयेत्संध्यां सायं प्रातः समाहितः ।
उल्लंघयति यो मोहात्स याति नरकं ध्रुवम् ॥ ५ ॥

## संध्याफलम्।

उद्यन्तमस्तयन्तमादित्यमभिध्यायन्कुर्वन्न्य ब्राह्मणो विद्वान्सकलं भद्रमश्नुते । तैत्तिरीय अ० २ प्रपा० २ अनु० २.

अत्रिः—संध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥ १ ॥

याज्ञवल्क्यः । यावन्तोऽस्यां पृथिव्यां हि विकर्मस्थास्तु वै द्विजाः।
तेषां वै पावनार्थाय सन्ध्या सृष्टा स्वयम्भुवा ॥ २ ॥
निशायां वा दिवा वापि यदज्ञानकृतं भवेत् ।
त्रिकालसन्ध्याकरणात्तत्सर्वं हि प्रणश्यति ॥ ३ ॥

मनुः—पूर्वां सन्ध्यां जपँस्तिष्ठन्नैशमेनो व्यपोहति ।
पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम् ॥ ४ ॥

शंखः—अनृतं मद्यगंधं च दिवा मैथुनमेव च ।

पुनाति वृषलस्यान्नं येन संध्या ह्युपासिता ॥ ५ ॥

मनुः । ऋषयो दीर्घसंध्यत्वादीर्घमायुरवाप्नुयुः ।

प्रज्ञां यशश्च कीर्तिं च ब्रह्मवर्चसमेव च ॥

योगियाज्ञवल्क्यः । सन्धौ सन्ध्यामुपासीत नास्तगेनोद्गतेरवै ।

अत्रिः । सन्ध्यात्रयं तु कर्त्तव्यं द्विजेनात्मविदा सदा ।

तैत्तिरीयब्राह्मणं । उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन्
ब्राह्मणो विद्वान् सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ।
ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद ।

व्यासः । न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ।

सोऽहमस्मीत्युपासीत विधिना येनकेनचित् ॥

श्रुतिः । ब्रह्मैवाहमस्मीत्यभिध्यायेत् ।

काले वाप्यथवाकाले संध्यावंदनतत्परः ।

अविद्यो वा सविद्यो वा ब्राह्मणो मामकीतनुः ॥

सर्वेषां ब्राह्मणानां तु त्रिषु कालेष्वयं विधिः ।

शुचिर्वाप्यशुचिर्वापि संध्याकाले विधियते ॥

# जपविधिः।

मनुः। आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः।
शुचौ देशे जपन् जप्यमुपासीत यथाविधि॥

शंखः। कुशबृश्यां समासीनः कुशोत्तरीयां वा कुशपवित्रपाणिः उदङ्मुखः सूर्याभिमुखो वाऽक्षमालामादाय देवतां ध्यायन् जपं कुर्यात्।

योगियाज्ञवल्क्यः। ॐकारं पूर्वमुच्चर्य भूर्भुवःस्वस्तथैव च।
गायत्रीं प्रणवं चान्ते जप एवमुदाहृतः॥

बोधायनः। त्रिविधो जपयज्ञः स्यात्तस्य भेदं निबोधतः।
वाचिकश्च उपांशुश्च मानसस्त्रिविधः स्मृतः॥
त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः।

हारितः। यदुच्चनीचोच्चरितैः शब्दैः स्पष्टपदाक्षरैः।
मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपः स्मृतः॥
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयन्।
अपरैरश्रुतः किञ्चित् स उपांशुजपः स्मृतः॥

धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् ।
शब्दार्थचिन्तनं भूयः कथ्यते मानसो जपः ॥

वाचिकस्यैकमेकं स्यादुपांशोः शतमुच्यते ।
सहस्रं मानसः प्रोक्तो मन्वत्रिभृगुनारदैः ॥

शौनकः। मनः सन्तोषणं शौचं मौनं मन्त्रार्थचिंतनम् ।
अव्यग्रत्वमनिर्वेदो जपः सम्पत्तिहेतवः ॥

संवर्त्तः। लोकवार्त्ताऽऽदिकं श्रुत्वा दृष्ट्वा स्पृष्ट्वा प्रभाषितम् ।
संख्यां विना च यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥

गौतमः। गच्छतस्तिष्ठतो वाऽपि स्वेच्छया कर्म कुर्वतः ।
अशुचेर्वा विना संख्यां तत्सर्वं निष्फलं भवेत् ॥

क्रोधं लोभं तथा निद्रां निष्ठीवनविजृम्भणे ।
दर्शनं च श्वनीचानां वर्जयेज्जपकर्मणि ॥

आचामेत्संभवे चैषां स्मरेद्विष्णुं सुरार्चितम् ।
ज्योतींषि च प्रशंसेद्वा कुर्याद्वा प्राणसंयमम् ॥

ज्वलनं गाश्च विप्रांश्च यतीन्वाऽपि विशुद्धये ।

व्यासः। न संक्रामन् न च हसन् न पार्श्वमवलोकयन् ।

नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥
न पदापादमाक्रम्य न चैव हि तथा करौ ।
न चासमाहितमना न च संश्रावयन् जपेत् ॥

बोधायनः । नाभेरधः संस्पर्शं कर्म संयुक्तो वर्जयेत् ॥
गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं यतः ।
एकान्ते तु शुभे देशे तस्माज्जप्यं सदाचरेत् ॥

याज्ञवल्क्यः । ध्यायेत्तु मनसा मन्त्रं जिह्वोष्ठौ न विचालयेत् ।
न कम्पयेच्छिरो ग्रीवां दन्तान्नैव प्रकाशयेत् ॥
यक्षरक्षः पिशाचाश्च सिद्धविद्याधरागणाः ।
यस्मात्प्रभावं गृह्णन्ति तस्माद्गुह्यं तु कारयेत् ॥

याज्ञवल्क्यः । यदि वाग्यमलोपः स्याज्जपादिषु कथंचन ।
व्याहरेद्वैष्णवम्मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥
अज्ञानाद्यदि वा मोहात्प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥

तथा च शतपथश्रुतिः ॥

अथ यद्वाचं यमो व्याहरति तस्मादुहैष विसृष्टो यज्ञः पराङ् ।
वर्तते तत्र वैष्णवीमृचं वा यजुर्वा जपेदित्यादि ॥

छन्दोगपरिशिष्टे । सर्वेषामेव वेदानां गुह्योपनिषदां तथा ।
सारभूता तु गायत्री निर्गता ब्रह्मणो मुखात् ॥

बृहद्यमः । न तथा वेदजपतः पापं निर्दहति द्विजः ।
यथा सावित्रीं जपतः सर्वपापैः प्रमुच्यते ॥

योगियाज्ञवल्क्यः। वेदाः सांगास्तु चत्वारोऽधीताः सर्वेऽथ वाङ्मयाः।
गायत्रीं यो न जानाति वृथा तस्य परिश्रमः ॥

गायत्रीमात्रसन्तुष्टः श्रेयान्विप्रः सुयन्त्रितः ।
न यन्त्रितस्त्रिवेदी च सर्वाशी सर्वविक्रयी ॥

मनुः । ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोंकृतं पूर्वं पुरस्ताच्च विशीर्यति ॥

प्राक्कूलान्पर्युपासीनः पवित्रैश्चैव पावितः ।
प्राणायामैस्त्रिभिः पूतस्तत ओंकारमर्हति ॥

अकारं चाप्युकारं च मकारं च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च ॥

त्रिभ्य एव तु वेदेभ्यः पादंपादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥

एतदक्षरमेतां च जपन्व्याहृतिपूर्विकाम् ।
संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥

सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः ।
महतोऽप्येन सोमासात्त्वचेवाहिर्विमुच्यते ॥

ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥

योऽधीतेऽहन्यहन्येतांस्त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्मपरमेभ्येति वायुभूतः खमूर्तिमान् ॥

एकाक्षरं परंब्रह्म प्राणायामाः परंतपः ।
सावित्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते ॥

क्षरन्ति सर्वा वैदिक्यो जुहोति यजति क्रियाः ।
अक्षरं दुष्करं ज्ञेयं ब्रह्मचैव प्रजापतिः ॥

विधि यज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥

ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥

जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥

इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद्विद्वान्यन्तेव वाजिनाम् ॥

एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः ।
तानि सम्यक्प्रवक्ष्यामि यथावदनुपूर्वशः ॥

श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पायूपस्थं हस्तपादं वाक्चैव दशमी स्मृता ॥

बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्वशः ।
कर्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते ॥

एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम् ।
यस्मिञ्जिते जितावेतौ भवतः पञ्चकौ गणौ ॥

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति ॥

न जातु कामः कामानामुपभोगेन शाम्यति ।

हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥

इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ॥
तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥

वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा ।
सर्वान्संसाधयेदर्थानक्षिण्वन्यो गतस्तनुम् ॥

अपां समीपे नियतो नैत्यकं विधिमास्थितः ।
सावित्रीमप्यधीयीत गत्वारण्यं समाहितः ॥

## जम्बका नाम्नी गायत्री.

विधृतिन्नाभ्याघृतᳫँ रसेनापो यूष्णा
मरीचीर्विप्रुड्भिर्नीहारमूष्मणाशीनंवसं
याप्रुष्वा अश्रुभिर्ह्रादुनीर्दूषीकाभिरस्त्नारक्षांᳫँसि
चित्राण्यंगैर्नक्षत्राणिरूपेणं पृथिवी
न्त्वचा जुम्बकाय स्वाहा ॥ शु. य. अ. २५ ९

# अभिवादनविधिः ।

याज्ञवल्क्यः—ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् ।

ब्रह्मपुराणे । उत्थाय मातापितरौ पूर्वमेवाभिवादयेत् ।
आचार्यश्च ततो नित्यमभिवाद्यो विजानता ॥

मनुः । लौकिकं वैदिकं चापि तथाऽऽध्यात्मिकमेव वा ।
आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ।
अभिवादात्परं विप्रो ज्यायांसमभिवादयेत् ।
असौ नामाऽहमस्मीति स्वं नाम परिकीर्तयेत् ॥

आपस्तम्बः । स्वदक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयेत् ।
उरःसमं राजन्यो मध्यसमं वैश्यो नीचैः शूद्रः प्राञ्जलिः।

मनुः। भो शब्दं कीर्तयेदन्ते स्वस्यनाम्नोऽभिवादने ।
नाम्नां स्वरूपभावो हि भो शब्द ऋषिभिः स्मृतः ।
आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरप्लुतः ॥

विष्णुः—जन्मप्रभृति यत्किंचिच्चेतसाधर्ममाचरेत् ।

सर्वं तन्निष्फलं याति एकहस्ताभिवादनात् ॥

मनुः । यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ।

यमः—अभिवादे तु यो विप्रः आशिषं न प्रयच्छति ।
श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः ।

शातातपः । पाखण्डं पतितं व्रात्यं महापातकिनं शठम् ।
सोपानत्कं कृतघ्नं च नाभिवादेत्कदाचन ॥

धावन्तं च प्रमत्तं च मूत्रोत्सर्गकृतं तथा ।
भुञ्जानमाचमनार्हं च नास्तिकं नाभिवादयेत् ॥

वमन्तं जृम्भमाणं च कुर्वन्तं दन्तधावनम् ।
अभ्यक्तशिरसं चैव स्नातं नैवाभिवादयेत् ॥

बृहस्पतिः । जपयज्ञगणस्थं च समित्पुष्पकुशानलान् ।
उदपात्रार्घभैक्षान्नहस्तंतं नाभिवादयेत् ।

उदक्यां सूतिकां नारीं भर्तृघ्नीं ब्रह्मघातिनी^ ।
अभिवाद्य द्विजो मोहादहोरात्रेण शुद्ध्यति ।

जमदग्निः । देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वा त्रिदण्डिनम् ।

नमस्कारं न कुर्याच्चेत्प्रायश्चित्ती भवेन्नरः।

मनुः। अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।
चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशो बलम्।

## देवपूजाप्रकरणम्॥

कूर्मपुराणे। यो मोहादथवाऽऽलस्यादकृत्वा देवतार्चनम्॥
भुङ्क्ते स याति नरकं शूकरेष्वभिजायते॥

(कु. पु. १-२-१८-१२१.)

अकृत्वा देवपुजां च महायज्ञान् द्विजोत्तमः।
भुञ्जीत चेत्स मूढात्मा तिर्यग्योनिं निगच्छति॥

(कु पु. १-२-१८-११९.)

वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियास्तथा।
नाशयन्त्याशु पापानि देवानामर्चनं तथा॥

(कु. पु. १-२-१८-१५.)

विष्णुः । येऽर्चयन्ति सदा विष्णुं शंखचक्रगदाधरम् ।
सर्वपापविनिर्मुक्ता ब्रह्माणं प्रविशन्ति ते ॥

मनुः । नित्यंस्नात्वाशुचिः कुर्याद्देवर्षिपितृतर्पणम् ।
देवताभ्यर्चनं चैव समिदाधानमेव च ॥

याज्ञवल्क्यः । समाहितेन मनसा चैतन्यान्तरवर्तिना ।
आत्मनोऽभीष्टदेवानां ध्यानं ध्यानमिहोच्यते ॥

अग्निदेवो द्विजातीनां मुनीनां हृदि दैवतं ।
प्रतिमा स्वल्पबुद्धीनां सर्वत्र समदर्शिनाम् ॥

श्रुतिः । द्वेवाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामृतं च
स्थितं च यच्च सच्च त्यच्च ॥

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनꣳहि तत् ॥

श्रुतिः । सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनी ।
संपश्यन्ब्रह्म परमं याति नान्येन हेतुना ॥

द्वे रूपे वासुदेवस्य व्यक्तं चाव्यक्तमेव च ।
अव्यक्तं ब्रह्मणो रूपं व्यक्तमेतच्चराचरम् ॥

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'।
'अहं ब्रह्मेति मां ध्यायन्नेकाग्रमनसा सकृत्।
सर्वं तरति पाप्मानं कल्पकोटिशतैः कृतम्'॥
सम्यग्दर्शनसंपन्नः कर्मभिर्न निबध्यते।
दर्शनेन विहीनस्तु संस्कारं प्रतिपद्यते॥
प्रायश्चित्तं ब्रह्मविदो यतेस्तु ब्रह्मवेदनम्।
दोषप्रसक्तावन्यत्र शास्त्रदृष्टं विधीयते॥
अतिपापप्रसक्तोऽपिध्यागन्निमिषमच्युतम्।
भूयस्तपस्वी भवति पंक्तिपावनपावनः॥
प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै।
यानि तेषामशेषाणां कृष्णानुस्मरणं परं।
यदि कुर्यात्प्रमादेन योगीकर्मविगर्हितं।
योगेनैव दहेदंहोना न्यत्तत्र कदाचन॥
स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः।
विपरीतस्तु दोषः स्यादुभयोरेष निश्चयः॥
जन्मान्तरसहस्रेषु यज्ञदानतपोध्वरैः।

नराणां क्षीणपापानां कृष्णभक्तिः प्रजायते ॥

नित्यनैमित्तिकैरेव नियमेनेश्वरार्पितैः ।
वहुजन्मकृतैर्विप्रः सत्त्वशुद्धिं समश्नुते ॥

स्ववर्णाश्रमधर्मेण तपसा हरितोषणात् ।
साधनं प्रभवेत्पुसां वैराग्यादिचतुष्टयं ॥

स्वकर्मणा तमभ्यर्च्यसिद्धिं विन्दति मानवः ।
भक्तानुकंपी भगवानिति सत्यं वचो हरिः ।

श्रद्धानुगहमीश्वरः ।

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥

जन्मान्तरसहस्त्रेषु बुद्धिर्या भाविता पुरा ॥
तामेव भजते जन्तुरुपदेशो निरर्थकः ।

इन्द्रियाभ्यामजय्याभ्यां द्वाभ्यामेव हतं जगत् ।
अहो उपस्थजिह्वाभ्यां ब्रह्मादिमशकावधि ॥

श्रुतिः । तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्व-
स्मादन्तरतरं यदयमात्मा ॥

संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः।
ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति॥

ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरं ॥

स्वामात्मानं परं मत्वा परमात्मानमेव च ।
आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताज्ञता ॥

ज्ञानं नोत्पद्यते पुंसां पापोपहतचेतसाम् ।

श्रुतिः। ब्रह्मैव सन्ब्रह्माभ्येति। ब्रह्मवेद ब्रह्मैव भवति ।
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताकेवलो निर्गुणश्च ॥

अग्निहोत्रं च वेदाश्च राक्षसानां गृहेगृहे ।
दया सत्यं च शौचं च राक्षसानां न विद्यते ॥

श्रुतिः । सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
संपश्यन्ब्रह्म परमं याति नान्येन हेतुना ॥

नारदीये । स्त्रीणामनुपनीतानां शुद्राणां च नराधिप ।
स्पर्शने नाधिकारोऽस्ति विष्णोर्वा शंकरस्य च ॥

शुद्रो वाऽनुपनीतो वा स्त्री वा पिऽयतितोऽपि वा ।

केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते ॥

स्त्रीशूद्रोऽनुपनीतश्च वेदमन्त्रान्विवर्जयेत् ॥

श्रुतिः। यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥

श्रुतिः। ब्राह्मणो वै सर्वा देवता।

भागवते। सूर्योऽग्निर्ब्राह्मणा गावो वैष्णवः खं मरुज्जलम्।
भूरात्मा सर्वभूतानि तत्र पूजा पदानि ये ॥
सूर्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम्।
आतिथ्येन तु विप्राग्र्ये गोष्वंगयवसादिना ॥

वैष्णवे बन्धुसत्कृत्या खे हृदि ध्याननिष्ठया।
वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतः ॥

स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि।
क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥

मनुः। अप्स्वग्नौ चैव हृदये स्थण्डिले प्रतिमासु च।
विप्रेषु च हरेः सम्यगर्चनं मनुनास्मृतम् ॥
अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम्।

प्रतिमास्वल्पबुद्धिनां योगिनां हृदये हरिः।

तस्य सर्वगतस्यार्चा स्थण्डिले भावितात्मनां।
विप्राणां वपुराश्रित्य सर्वास्तिष्ठन्ति देवताः॥

अतस्तत्रैव ताः पूज्या अलाभे प्रतिमादिषु॥

विप्राणां रूपमास्थाय प्रचरन्तीह देवताः।
पूज्यन्ते ब्राह्मणा लाभे प्रतिमादिषु कुत्रचित्॥

## दर्भविधिः॥

हरीतः। आच्छिन्नाग्रान् सपत्रांश्च समूलान् कोमलान् शुभान्।
पितृदेवजपार्थं तु समादध्यात् कुशान् द्विजः॥

कुशहस्तेन यज्जप्तं दानं चैव कुशैः सह।
कुशहस्तस्तु यो भुंक्ते तस्य संख्या न विद्यते॥

कुशपूतं भवेत्स्नानं कुशेनोपस्पृशेत् द्विजः।
कुशेन चोद्धृतं तोयं सोमपानेन सम्मितम्॥

गोभिलः। कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः।

कुशाग्रे शंकरं विद्यात् त्रयो देवा व्यवस्थिताः ॥

शातातपः । जपे होमे च दाने च स्वाध्याये पितृतर्पणे ।
अशून्यं तु करं कुर्यात् सुवर्णरजतैः कुशैः ॥

हारीतः । मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः ॥

शंखः । दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥

दर्भाः पिंडेषु निर्माल्या ब्राह्मणाः प्रेतभोजने ।
मंत्रा गौस्तुलसी नीचे चितायां च हुताशनः ॥

हारीतः । चितौ दर्भाः पथि दर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु षट्कुशान् परिवर्जयेत् ॥

ब्रह्मयज्ञेषु ये दर्भा ये दर्भाः पितृतर्पणे ।
हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते ॥

अपूता गर्हिता दर्भा ये संच्छिन्ना नखैस्तथा ।
कथितानग्निदग्धांश्च कुशान् यत्नेन वर्जयेत् ॥

कात्यायनः । अनन्तर्गर्भितं साग्रं कौशंद्विदलमेव च ।

प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचित् ॥

द्व्यङ्गुलं मूलवलयं ग्रन्थिरेकाङ्गुलिर्भवेत् ।
चतुरंगुलमग्रं स्यात्पवित्रस्य प्रमाणकम् ॥

अत्रिः । ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते ।
भोजने वर्तुलं प्रोक्तमेवं धर्मो न हीयते ॥

कारिकायां । यथावज्रं सुरेन्द्रस्य यथा चक्रं हरेस्तथा ।
त्रिशूलं च त्रिनेत्रस्य ब्राह्मणस्य पवित्रकम् ॥

योगीयाज्ञवल्क्यः । अनामिकाधृतं हेम तर्जन्यां रूप्यमेव च ।
कनिष्ठिकाधृतं खड्गं तेन पूतो भवेन्नरः ॥



॥ श्रीः ॥

# शिक्षा ।

अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा
शास्त्रानुपूर्वं तद्विद्याद्यथोक्तं लोकवेदयोः ॥ १ ॥

प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः ।

पुनर्व्यक्ती करिष्यामि वाच उच्चारणे विधिम् ॥ २ ॥

त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः ।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा ॥३॥

स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमास्मृताः ॥ ४ ॥

अनुस्वारो विसर्गश्च ᳲक ᳲपौचापि पराश्रितौ ।
दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च ॥ ५ ॥ १ ॥

आत्मा बुद्धा समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ ६ ॥

मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ।
प्रातः सवनयोगं तं छन्दोगायत्रमाश्रितम् ॥ ७ ॥
कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम् ।
तारंतार्तीय सवनं शीर्षण्यं जागतानुगम् ॥ ८ ॥

सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्यमारुतः ।
वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ॥ ९ ॥

स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः ।

इति वर्णविदः प्राहुर्निपुणं तन्निबोधत ॥ १० ॥ २॥

उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ।
ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि ॥ ११ ॥

उदात्ते निषादगान्धारावनुदात्त ऋषभधैवतौ ।
स्वरित प्रभवाह्येते षड्जमध्यमपञ्चमाः ॥ १२ ॥

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ १३ ॥

ओभावश्च विवृत्तिश्च शषसा रेफ एव च ।
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १४ ॥

यद्योभावप्रसंधानमुकारादि परं पदम् ।
स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तिमूष्मणः ॥ १५ ॥ ३ ॥

हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् ।
औरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥ १६ ॥

कण्ठ्यावहा विचुयशास्तालव्या ओष्ठजावुपू ।
स्युर्मूर्धन्या ऋटुरषा दन्त्यालृतु लसाः स्मृताः ॥ १७ ॥

जिह्वामूले तुकुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः ।

ए ऐ तु कण्ठतालव्या ओ औ कण्ठोष्ठजौ स्मृतौ ॥१८॥

अर्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत् ।
ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम् ॥ १९ ॥

संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् ।
घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः ॥ २० ॥ ४ ॥

स्वराणामूष्मणां चैव विवृतं करणं स्मृतं ।
तेभ्योपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥ २१ ॥

अनुस्वारयमानां च नासिका स्थानमुच्यते ।
अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥ २२ ॥

अलाबुवीणा निर्घोषो दन्त्यमूल्यस्वरा ननु ।
अनुस्वारस्तु कर्त्तव्यो नित्यं ह्रोः शषसेषु च ॥ २३ ॥

अनुस्वारे विवृत्यां तु विरामे चाक्षरद्वये ।
द्विरोष्ठ्यौ तु विगृह्णीयाद्यत्रौकारवकारयोः ॥ २४ ॥

व्याघ्री यथा हरेत् पुत्रान्दंष्ट्राभ्यां न च पीडयेत् ।
भीतापतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥ २५ ॥ ५ ॥

यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते ।

एवं रङ्गाः प्रयोक्तव्याः खे अराँ इव खेदया ॥ २६ ॥

रङ्गवर्णं प्रयुञ्जीरन्नोग्रसेत्पूर्वमक्षरम् ।
दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत् ॥ २७ ॥

हृदये चैकमात्रस्त्वर्धमात्रस्तु मूर्धनि ।
नासिकायां तथार्धं च रङ्गस्यैवं द्विमात्रता ॥ २८ ॥

हृदयादुत्करे तिष्ठन्कांस्येन समनुस्वरन् ।
मार्दवं च द्विमात्रं च जघन्वाँ इति निदर्शनम् ॥ २९ ॥

मध्ये तु कम्पयेत्कम्पमुभौ पार्श्वौ समौ भवेत् ।
स रङ्गं कम्पयेत्कम्पं रथी वेत्ति निदर्शनम् ॥३०॥ ६ ॥

एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः ।
सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥ ३१ ॥

गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ ३२ ॥

माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः ।
धैर्यं लयसमर्थं च षडेते पाठकागुणाः ॥ ३३ ॥

शङ्कितं भीतमुद्धृष्टमव्यक्तमनुनासिकम् ।
काकस्वरं शिरसि गतं तथा स्थानविवर्जितम् ॥ ३४ ॥

उपांशुदष्टं त्वरितं निरस्तं विलम्बितं गद्गदितं प्रगीतम् ।
निष्पीडितं ग्रस्तपदाक्षरं च वदेन्न दीनं न तु सानुनास्यम् ।३५।

प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन ।
मध्यंदिने कंठगतेन चैव चक्राह्वसं कूजितसन्निभेन ॥ ३६ ॥

तारंतु विद्यात्सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम् ।
मयूरहंसान्यभृतस्वराणां तु ल्येन नादेन शिरःस्थितेन ॥३७॥७।

अचोऽस्पृष्टा यणस्त्वीपन्नेमिस्पृष्टाः शलः स्मृताः ।
शेषाः स्पृष्टा हलः प्रोक्ता निबोधानुप्रदानतः ॥ ३८ ॥

अमोऽनुनासिकानह्रोनादिनोहझपः स्मृताः ।
ईषन्नादायणोजश्च श्वासिनस्तु खफादयः ॥ ३९ ॥

ईषच्छ्वासांश्च रोविद्याद्गोर्धामैतत्प्रचक्षते ।
दाक्षीपुत्रः पाणिनिना येनेदं व्यापितं भुवि ॥ ४० ॥

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।

ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ ४१ ॥

शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।

ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ ४१ ॥

शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ ४२ ॥ ८ ॥

उदात्तमाख्याति वृषोऽङ्गुलीनां प्रदेशिनि मूलनि विष्टमूर्धा ।
उपान्तमध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव ॥४३॥

उदात्तं प्रदेशिनिं विद्यात्प्रचयं मध्यतोऽङ्गुलिम् ।
निहतं तु कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥ ४४ ॥

अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्तं नीचस्वरितम् ।
मध्योदात्तं स्वरितं द्व्युदात्तं त्र्युदात्तमिति नवपदशय्या ॥४५॥

अग्निः सोमः प्रवोवीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती ।
अग्निरित्यन्तोदात्तं सोम इत्याद्युदात्तं प्रेत्युदात्तं व इत्यनुदात्तं
वीर्यं नीचस्वरितम् ॥ ४६ ॥

हविषां मध्योदात्तं स्वरिति स्वारितम् ।

बृहस्पतिरिति द्व्युदात्तमिन्द्राबृहस्पती इति त्र्युदात्तम् ॥४७॥

अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः ।
स्वरितः कर्णमूलीयः सर्वास्ये प्रचयः स्मृतः ॥ ४८ ॥ १ ॥

चाषस्तु वदते मात्रां द्विमात्रं त्वेव वायसः ।
शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम् ॥ ४९ ॥

कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् ।
न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ ५० ॥

सुतीर्थादागतं व्यक्तं स्वाम्नायं सुव्यवस्थितम् ।
सुस्वरेण सुवक्रेण प्रयुक्तं ब्रह्म राजते ॥ ५१ ॥

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥५२॥

अव्यक्षरं हनायुष्यं विस्वरं व्याधिपीडितम् ।
अक्षताशस्त्ररूपेण वज्रं पतति मस्तके ॥ ५३ ॥

हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् ।
ऋग्यजुः सामभिर्दग्धो वियोनिमधिगच्छति ॥ ५४ ॥

हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ।
ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥५५॥१०॥

शंकरः शांकरीं प्रादाद्दाक्षीपुत्राय धीमते ।
वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः ॥ ५६ ॥

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ ५७ ॥

येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥ ५८ ॥

अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥ ५९ ॥

त्रिनयनमभिमुखनिःसृतामिमां यइह पठेत् प्रयतश्च सदा द्विजः।
स भवति धनधान्यपशुपुत्रकीर्तिमानतुलं च सुखं समश्नुते
दिवीति ॥६०॥११॥

अथशिक्षामात्मोदात्तश्च हकारं स्वराणां यथा गीत्य चोस्पृ
ष्टोदात्तं चापस्तु शंकर एकादशः ॥

॥ इतिशिक्षासमाप्ता ॥

# स्वाध्यायाध्ययनम् ।

## कात्यायनपरिशिष्टसूत्रे ।

अथप्रतिज्ञा ।

मन्त्रब्राह्मणयोर्वेदनामधेयं तस्मिञ्छुक्ले याजुषाम्नाये माध्यन्दिनीयके मन्त्रे स्वरप्रक्रिया। हस्त्यनुदात्तो मूर्ध्न्युदात्तः श्रुतिमूले स्वरित एवं जात्यादयोऽभिहिता ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वरौ तानस्वराणि छन्दोवत्सूत्राणि॥ १ ॥ अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तस्य संयुक्तस्यापि रेफोष्मान्त्याभ्यामृकारेण चाविशेषेणादिमध्यावसानेषूच्चारणे जकारोच्चारणं द्विर्भावेऽप्येवमथापरान्तस्थास्यायुक्तान्यहल् संयुक्तस्योष्मऽऋकारै रेकारसहितोच्चारणमेवं तृतीयान्तस्थस्य क्वचिद्वकारस्य तु संयुक्तस्याविशेषेण सर्वत्रैव मथान्त्यस्यान्तस्थानां पदादिमध्यान्तस्थस्य त्रिविधं गुरुमध्यमलघुवृत्तिभिरुच्चारणमथो मूर्द्धन्योष्मणोऽसंयुक्तस्य टुमृते संयुक्तस्य च खकारोच्चारणमध्ययनादिकर्मस्वर्थवेलायां प्रकृत्या ॥ २ ॥ अथानुस्वारस्य ँ इत्यादेशः 'श,' 'ष,' 'स,' 'ह,' रेफेषु परेषु तस्य त्रैविध्यमाख्यातम्। ह्रस्वदीर्घगुरुभेदैर्दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः परसवर्णेषप्रकृत्या चान्यत्र विसर्गेष्वीपद्विरामः पदा-

ह्यस्य संयुक्ताकारस्येषद्दीर्घता च भवतीषद्दीर्घता च भवतीति ॥ ३ ॥ मध्यन्दिनेन महर्षिणा याज्ञवल्क्याल्लब्धः शाखाविशेषो माध्यन्दिनः उपचारात्तंअधीयते विदन्ति वा माध्यन्दिनाः शिष्याः 'अण्'॥ तेषामयं स्वाध्यायः वृद्धाच्छः। ततःस्वार्थे 'कन्'। प्रचयजात्यादयः स्वरितभेदाः । तान एकश्रुतिः स्वरः । उदात्तादि स्वरसंस्कार नियमे सूत्राणि छन्दोवत् । वकारस्त्रिविधो ज्ञेयः गुरुर्लघुर्लघुतरः। आदिर्गुरुः लघुर्मध्ये पदान्ते च लघुतरः॥ १॥ पदस्याद्यन्तमध्ये स्यात् खकारोच्चारणं तथा । तृतीयवर्गयोगे तु 'ष' एवस्यात्सदैव हि ॥ २ ॥ टुक योगे तु नो भवेत् ॥ इति माध्यन्दिनशीक्षा ॥

'षः'खण्टुमृते चेति केशवशिक्षासूत्रम्-विसर्गेषु किञ्चिद्विरामः। तस्य स्पष्टोच्चारणं पदादेः संयुक्ताकारस्य दीर्घोच्चारणं ॥ अत एवाध्यायसमाप्तौ दीर्घपाठ इति वदन्ति ॥
छन्दोवदित्यतिदेशात् सूत्रे विसर्गस्य स्पष्टोच्चारणं कुतो नेति न विद्मः ॥

'ड' 'ढौ' 'ळ' 'ळ्ह' वेकेषां ॥ 'ड' 'ढौ' 'ळ' 'ळ्हौ' आपद्येते ॥ स्वरमध्ये समानपदे इत्यर्थः ॥

इति कातीयप्रातिशाख्ये ।

आश्वलायनप्रातिशाख्ये तु। जिह्वामूलं तालुचाचार्य आह
स्थानं डकारस्य तु वेदमित्रः॥

ळहकारतामेति स एव चास्य ढकारः सन्नूष्मणा सम्प्रयुक्तः॥१॥

द्वयोश्चास्य स्वरयोर्मध्यमेत्य समपद्यते स डकारो ळकारः॥

वेदमित्रः आचार्यः ॥ डस्यस्थानं तालुसंयुक्तजिह्वामूलं

इत्याद्युक्तम् ॥

'पारस्करगृह्यसूत्रे।' प्रत्यङ्मुखा योपविष्टा योपसन्नाय समीक्षमाणाय समीक्षिताय। वेदꣳ समाप्य स्नायाद्ब्रह्मचर्यं वाष्टाचत्वारिꣳशकं द्वादशकेऽप्येके गुरुणानुज्ञातो विधिविधेयस्तर्कश्च वेदः षडङ्गमेके न कल्पमात्रे कामं तु याज्ञिकस्योपसंगृह्य ॥

'याज्ञवल्क्यशिक्षासूत्रे।'

जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः॥
अनुलोमविलोमाभ्यां त्रिवारं हि पठेत्क्रमः।

विलोमे पदवत्सन्धिरनुलोमे यथाक्रमम् ॥

ब्रूयात्क्रमविपर्यासावर्धर्चस्यादितोऽन्ततः ।
अन्तं चादिं नयेदेवं क्रमं मालेति कीर्त्यते ॥

पदोत्तरां शिखामेव शिखामार्याः प्रचक्षते ।
क्रमाद्द्वित्रिचतुःपञ्च पदक्रमसुदाहरेत् ॥

पृथक् पृथग्विपर्यस्य लेखामाहुः पुनः क्रमात्
ब्रूयादादेः क्रमं सम्यगन्तादुत्तारयेदिति ॥

वर्गं वा ऋचि वा यत्र पठनं स ध्वजः स्मृतः ।
क्रममुक्त्वा विपर्यस्य पुनश्च क्रममुत्तमम् ॥

अर्धर्चादेवमेवोक्तः क्रमदण्डो विधीयते ।
पादशोऽर्धर्चशो वापि सहोक्त्या दण्डवद्रथः ॥

अन्तक्रमं पठेत्पूर्वमादिपर्यन्तमानयेत् ।
आदिक्रमं नयेदन्तं घनमाहुर्मनीषिण इति ॥

# अनध्यायाः।

पारस्करगृह्यसूत्रे—व्रातेमावास्यामिति सर्वानध्यायः॥ श्राद्धाशने चोल्कावं स्फूर्जद्भूमिचलनाग्न्युत्पातेष्वृतुसन्धिषु चाऽकालमुत्सृष्टेष्वभ्रदर्शने सर्वरूपे च त्रिरात्रं त्रिसन्ध्यं वा भुक्त्वार्द्रपाणिरुदके निशायां सन्धिवेलयोरन्तःशवे ग्रामे ग्रामेन्तर्दिवाकीर्तिधावतोऽभिशस्तपतितदर्शनाश्चर्याभ्युदयेषु च तत्कालं नीहारे वादित्रशब्द आर्त्तस्वने ग्रामान्ते श्मशाने श्वगर्दभोलूकशृगालसामशब्देषु शिष्टाचरिते च तत्कालं गुरौ प्रेतेपोऽभ्यवेयाद्दशरात्रं चोपरमेत्स तानूनत्रीणि स ब्रह्मचारिणि त्रिरात्रमेकरात्रमसब्रह्मचारिण्यर्धपष्ठान्मासानधीत्योत्सृजेयुरर्धसप्तमासान्वा अमामृचंजपत्युभाकवीयुवा यो नो धर्मः परापतत् परिसंख्यानि धर्मिणो विसंख्यानि विसृजामहइति त्रिरात्रं सहोपविश्यतिष्ठेरन्॥ १४॥

कात्यायन परिशिष्टसूत्रे—विभ्राडित्यनुवाक पुरुषसूक्तशिवसङ्कल्पमण्डलब्राह्मणैरित्युपस्थाय। प्रदक्षिणीकृत्य नमस्कृत्योपविशेद्दर्भेषु दर्भपाणिः स्वाध्यायं च यथाशक्त्यादावारभ्य वेदम्॥

# अनध्याये अध्ययनानिषेधः।

" अनध्यायेष्वध्ययने प्रज्ञमायुः प्रजां श्रियम्।
ब्रह्मवीर्यं बलं तेजो निकृन्तति यमः स्वयम्॥
मन्त्रवीर्यक्षयभयादिन्द्रो वज्रेण हन्ति च।
ब्रह्मराक्षसतां चैति नरकश्च भवेद्ध्रुवम्॥ "

महानिशा च विज्ञेया मध्यस्थं प्रहरद्वयं।
रात्रेः पूर्वोत्तरौ यामौ वेदाभ्यासेन तौ नयेत्॥

शुश्रुषा श्रवणं चैव ग्रहणं धारणं तथा।
ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः॥

अमापूर्णी गुरूं हन्ति शिष्यं हन्ति चतुर्दशी।
उभयोरष्टमी हन्ति प्रतिपत्पाठनाशिनी॥

विद्यारँभे गुरुः श्रेष्ठः मध्यमौ भृगुभास्करौ।
कनिष्ठौ भौमसौरी च अविद्या बुधसोमयोः॥

# ब्रह्मयज्ञविधिः।

छंन्दोगपरिशिष्टे

कात्यायनः । यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञस्तु स स्मृतः ।
स चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ॥
वैश्वदेवावसाने वा नान्यत्रेति निमित्तकात् ।
न हन्ततिं न होमं च स्वाध्यायं पितृतर्पणम् ॥
नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचित् ॥
अहरहः स्वाध्यायमधीते इति श्रुतेः ।

कारिकायां विशेषः ।

बद्धाञ्जलिर्दर्भपाणिः प्राङ्मुखस्तु कुशासनः ।
वामांघ्रिमुत्तमं कृत्वा दक्षिणं तु तथा करम् ॥
दक्षिणे जानुनि करोत्यञ्जलिं तमृषेर्मतात् ।
प्रणवं प्राक् प्रयुञ्जीत व्याहृतीस्तिस्र एव तु ॥
गायत्रीं चानुपूर्वेण विज्ञेयं ब्रह्मणो मुखम् ।
ॐ स्वस्ति ब्रह्मयज्ञान्ते प्रोक्त्वा दर्भान् क्षिपेदुदक् ॥

वेदादिकमुपक्रम्य यावद्वेदसमापनम् ।
अध्यात्मिकाऽथवा विद्या ऋग्यजुसाम एव चेति ॥

यथाह याज्ञवल्क्यः—

वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।
जपयज्ञप्रसिद्ध्यर्थं विद्याञ्चाध्यात्मिकीं जपेत् ॥

मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः ।
पितृन्मधुघृताभ्यां च ऋचोऽधीते हियोऽन्वहम् ॥

मनुः । वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥

# तर्पणविधिः ।

हव्यवाहनो वै देवानां कव्यवाहनः पितॄणामितिश्रुतेः

योगियाज्ञवल्क्यः पितॄन् ध्यायन् प्रसिञ्चेद्वै जपन्मंत्रान्यथा-
क्रममिति ॥

बृहत्पराशरः । निष्पीडयेत्स्नानवस्त्रं तिलदर्भसमन्वितं ।
न पूर्वं तर्पणाद्वस्त्रं नैवाम्भसि न पादयोरिति ॥

निष्पीडयति यः पूर्वं स्नानवस्त्रमतर्पिते ।
निराशाः पितरो यान्ति शापन्दत्वा सुदारुणम् ॥
द्वादश्यां पंचदश्यां च संक्रान्तौ श्राद्धवासरे ।
वस्त्रं निष्पीडयेन्नैव न च क्षारेण योजयेत् ॥
कठाः काण्वाश्च जावाला ये च वाजसनेयिनः ।
निषिद्धेऽपि दिने कुर्युस्तर्पणं तिलमिश्रितम् ॥
कात्यायनः । उपरागे (ग्रहणे) पितृश्राद्धे पातेऽमायां च संक्रमे ।
निषिद्धेऽपीह सर्वत्र तिलैस्तर्पणमाचरेत् ॥
गर्गः कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् ।
पितॄणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणम् ।
पृथ्वीचन्द्रोदये । तीर्थे तिथिविशेषे च गंगायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ॥
वायुपुराणे । तिलदर्भैस्तु संयुक्तं श्रद्धया यत्प्रदीयते ।
तत्सर्वममृतं भूत्वा पितॄणामुपतिष्ठते ॥
याज्ञवल्क्यः तिलानामप्यभावे तु सुवर्णरजतान्वितं ।

तदभावे निषिञ्चेत्तु दर्भैस्तोयैर्न चान्यथा ॥

यद्युद्धृतं निषिञ्चेत्तु तिलान्संमिश्रयेज्जले ।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥

शुक्लैस्तु तर्पयेद्देवान्मनुष्याञ्छबलैस्तिलैः ।
पितॄंस्तुतर्पयेत्कृष्णैस्तर्पणे सर्वदा द्विजः ॥

योगियाज्ञवल्क्यः । सवर्णेभ्यो जलं देयं नाऽसवर्णेभ्य एव च ।
गोत्रनामस्वधाकारैस्तर्पयेदनुपूर्वशः ॥

नास्तिक्यभावाद्यस्तांस्तु न तर्पयति वै पितॄन् ।
पिबन्ति देहनिःस्रावं पितरोऽस्य जलार्थिनः ॥

यावद्देवानृषींश्चैव पितॄंश्चापि न तर्पयेत् ।
तावन्न पीडयेद्वस्त्रं यो हि स्नातो भवेद्द्विजः ॥
निष्पीडयति यो विप्रः स्नानवस्त्रमतर्प्य च ।
निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम् ॥
तातामबात्रितयं सपत्नजननी मातामहादित्रयं
सस्त्रीस्त्रीतनयादितातजननी स्वभ्रातरः सस्त्रियः ।

तातांम्बात्मभगिन्यपत्यधवयुक् जायापिता सद्गुरुः
शिश्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥

योगियाज्ञवल्क्यः । वस्त्रनिष्पीडितं तोयं स्नातस्योच्छिष्टभागिनः।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले ॥

गोभिलसूत्रे । 'स्त्रीणां दान्तं नामज्ञेयम्' ॥

॥ इति तर्पणविधिः समाप्ता ॥

# वैश्वदेवविधिः ।

श्रुतिः । यावज्जीवमग्निहोत्रं जुहुयात् ॥

श्रुतिः । अररहः स्वाहाकुर्यादन्नाभावे केनचिदाकाष्टात् ।
अकृते वैश्वदेवे तु भिक्षुके गृहमागते ॥
उद्धृत्य वैश्वदेवार्थं भिक्षुकन्तु विसर्जयेत् ।
वैश्वदेवाकृतेः पापं शक्तो भिक्षुर्व्यपोहितुम् ।
कातीयानां तु स्मार्तश्रौताग्निमतामादावेव
वैश्वदेवादिकं कुर्यात् । अन्येषामन्ते ।

पक्वाभावे स्मृत्यर्थसारे विशेषः ।

पक्वाभावे प्रयासे वा तन्दुलानौषधीस्तु वा ।
पयोदधिघृतं वाऽपि कन्दमूलफलादि वा ॥
योजयेद्देवयज्ञादौ जलं वाऽप्सु जले पतेत् ।
इदं स्रुवेण होतव्यं पाणिना कठिनं हविः ॥

छन्दोगपरिशिष्टे कात्यायनः ।

स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् ।
हन्तकारो मनुष्याणां स्वधाकारः स्वधाभुजाम् ॥

मनुः । पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥
तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः ।
पञ्चक्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
पञ्चैतान्यो महायज्ञान्न हापयति शक्तितः ।

स्वगृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥
देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥
अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् ।
यज्ञशिष्टाशनं ह्येतत्सतामन्नं विधियते ॥
विघसाशी भवेन्नित्यं नित्यं वामृतभोजनः ।
विघसो भुक्तशेषं तु यज्ञशेषं तथामृतम् ॥

श्रुतिः । 'यद्ब्राह्मणेभ्योऽन्नंददाति तन्मनुष्ययज्ञः सन्तिष्ठते' ।

भगवद्गीता । यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकील्बिषैः ।
भुञ्जते तेत्वघं पापा ये पचंत्यात्मकारणात् ॥

विष्णुपुराणे । ततो गोदोहमात्रं वै कालं तिष्ठेद् गृहांगणे ।
अतिथिग्रहणार्थाय तदर्धं वा यथेच्छया ॥

भगवद्गीता । अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।

असदित्युच्यते पार्थ न च तत् प्रेत्यनो इह ॥

पाराशरः । अकृत्वा वैश्वदेवं तु भुञ्जते ये द्विजाधमाः ।
सर्वे ते निष्फला ज्ञेयाः पतन्ति नरकेऽशुचौ ॥

वैश्वदेवविहीना ये आतिथ्येन वहिष्कृताः ।
सर्वे ते नरकं यान्ति काकयोनिं व्रजन्ति च ॥

दूराध्वोपगतं श्रान्तं वैश्वदेव उपस्थितम् ।
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ॥

नैकग्रामीणमतिथिं संगृह्णीत कदाचन ।
अनित्यमागतो यस्मात्तस्मादतिथिरुच्यते ॥

अतिथिं तत्र संप्राप्तं पूजयेत्स्वागतादिना ।
अर्घ्यासनप्रदानेन पादप्रक्षालनेन च ॥
श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च ।
गच्छन्तं चानुयानेन प्रीतिमुत्पादयेद् गृही ॥

आसनाऽवसथौ शय्यामनुव्रज्यामुपासनम् ।
उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् ॥

नानुगृह्णाति यो विप्रो ह्यतिथिं वेदपारगम् ।
अदत्वा चान्नमात्रन्तु भुक्त्वा भुंक्ते तु किल्बिषम् ॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते ।
पितरस्तस्य नश्यन्ति दशवर्षाणि पञ्च च ॥
काष्ठभारसहस्रेण घृतकुम्भशतेन च ।
अतिथिर्यस्य भग्नाशस्तस्य होमो निरर्थकः ॥
न पृच्छेद्गोत्रचरणे न स्वाध्यायं श्रुतं तथा ।
हृदये कल्पयेद्देवं सर्वदेवमयो हि सः ॥
अपूर्वः सुव्रती विप्रो ह्यपूर्वश्चातिथिस्तथा ।
वेदाभ्यासरतो नित्यं तावपूर्वौ दिने दिने ॥
वैश्वदेवे तु संप्राप्ते भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षुकं तं विसर्जयेत् ॥
वैश्वदेवकृतान्दोषान् शक्तो भिक्षुर्व्यपोहितुम् ।
न हि भिक्षुकृतान्दोषान्वैश्वदेवो व्यपोहति ॥
यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत् ॥

यति हस्ते जलं दद्याद्भैक्ष्यं दद्यात्पुनर्जलम्।
तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम्॥

ब्राह्मणस्य मुखं क्षेत्रं निरूपरमकण्टकम्।
वापयेत्सर्वबीजानि सा कृषिः सार्वकामिकी॥

सुक्षेत्रे वापयेद्बीजं सुपात्रे निक्षिपेद्धनम्।
सुक्षेत्रे च सुपात्रे च ह्युप्तं दत्तं न नश्यति॥

# निरग्नेर्नित्यश्राद्धविधिः।

कृतत्वात्पितृयज्ञस्य साग्नेः श्राद्धं न विद्यते।
नित्यं पित्र्येण बलिना निरग्नेस्तत्तु विद्यते॥

बलेरभावात्पित्र्यस्य शिष्टात्काकबलिः स्मृतः।
प्रदीपचण्डिकादौ तु स्मृतिः सम्यगुदाहृता॥

तथा। नित्यश्राद्धं निरग्नेः स्यात्साग्नेः पित्र्योर्बलिः स्मृतः।
कात्यायनीयवाक्येन विकल्पः प्रतिभाति हि॥

श्राद्धं वा पितृयज्ञः स्यात्पित्र्योर्बलिरथापि वा ।
साग्निकः पितृयज्ञान्तं बलिकर्म समाचरेत् ॥
अनग्निर्हुतशेषन्तु काके दद्यादिति स्मृतिः ॥

मनुः । शुनां च पतितानां च श्वपचां पापरोगिणां ।
वायसानां क्रमीणां च शनकैर्निक्षिपेद्भुवि ॥

नित्यश्राद्धे विशेषः । हेमाद्रौ । एकमप्याशयेद्विप्रं षण्णामप्यन्वहं गृही ॥

प्रचेताः । नामन्त्रणं न होमं च नाह्वानं न विसर्जनम् ।
न पिण्डदानं विकिरं न दद्यादत्रदक्षिणाम् ॥

काशीखण्डे । नित्यश्राद्धं दैवहीनं नियमादिविवर्जितम् ।
दक्षिणारहितं चैव दातृभोक्तृव्रतोज्झितम् ।

भविष्ये । आवाहनं स्वधाकारं पिण्डाग्नौ करणादिकम् ।
ब्रह्मचर्यादिनियमा विश्वेदेवा न चैव हि ॥
दातृणामथ भोक्तृणां नियमो न च विद्यते ॥

मनुः । कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमाहरेत् ॥

यदन्नं पुरुषोऽश्नाति तदन्नात्पितृदेवताः ॥

अपक्केनापि पक्केन तृप्तिं कुर्यात्सुतः पितुः ॥

व्याससंहितायाम्—एकं तु भोजयेद्विप्रं पितॄनुद्दिश्य यत्सदा।

नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञोगतिप्रदः ॥

॥ इति नित्यश्राद्धविधिः समाप्ता ॥

## भोजनविधिः।

पाराशरः। यो वेष्टितशिरा भुंक्ते यो भुंक्ते दक्षिणामुखः।

वामपादे करं न्यस्य तद्वै रक्षांसि भुञ्जते ॥

वृद्धगोत्तमः। सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयं।

चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना।

भृगुः। ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि।

तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः ॥

आन्हिककारीकासु। वामहस्ते जलं धृत्वा मणिबन्धे निधाय च।

भुञ्जमानः पिबन्वारि नोच्छिष्टं मनुरब्रवीत् ॥

नारदः। निर्माल्यं तुलसी पत्रं भक्षयेद्भोजनोत्तरम्।
शुद्धो भवति तत्काले एवं सर्वं विधियते॥

मनुः। ताम्बुले च फले चैव भुक्ते स्नेहानुलेपने।
दन्तलग्नस्य संस्पर्शे नोच्छिष्टं मनुरब्रवीत्॥

पयःपक्वं घृतपक्वं पक्वं केवलवन्हिना
तदन्नं फलवद्ग्राह्यमित्येवं मनुरब्रवीत्॥

घृतदुग्धादिभिः पक्वमन्नं शूद्रात्कलौ त्यजेत्।
अतीबालवृद्धातुराणां तु
' ईक्षुरापःपयोमूलं ताम्बुलं फलमौषधं।
भक्षयित्वापि कर्तव्या स्नानदानादिकाः क्रिया'॥

मनुः। अनारोग्यमनायुष्यमस्वर्ग्यमतिभोजनम्।
अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत्॥

जठरं पूरयेदर्धमन्नैर्भागं जलस्य च।
वायोः सञ्चारणार्थाय चतुर्थमवशेषयेत्॥

व्यासः। यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः।

अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥
पुराणे । व्याधितस्यार्थहीनस्य कुटुम्बात् प्रच्युतस्य च ।
अध्वानं प्रतिपन्नस्य भिक्षाचर्या विधीयते ॥

॥ इति भोजनविधिः समाप्ता ॥

---

# श्राद्धविधिः ।

मनुस्मृतौ ॥ कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ॥
श्राद्धे प्रशस्तास्तिथयो यथैतानतथेतर ।
पुराणसमुच्चये ॥ या तिथिर्यस्य मासस्य मृताहे तु प्रवर्तते ॥
सातिथिः प्रेतपक्षस्य पूजनीया प्रयत्नतः ॥
सम्पूजयेद्यतिं श्राद्धे पितृणां पुष्टिकारकम् ।
ब्रह्मचारी यतिश्चैव पूजनीयो हि नित्यशः ॥
तत्कृतं सुकृतं यत्स्यात्तस्य षड्भागमाप्नुयात् ॥
मार्कण्डेयोपि । भिक्षार्थमागतान्वाऽपि काले संयमिनो यतीन् ।

भोजयेत्प्रणताद्यैस्तु प्रसादोद्यतमानस ॥

तथा हि। मुण्डान् जटिलकाषायान् श्राद्धे यत्नेन वर्जयेत्।
शिखिभ्योधातुरक्तेभ्यस्त्रिदण्डिभ्यः प्रदापयेत् ॥

तथा हि। दीर्घकालं ब्रह्मचर्यं वानप्रस्थाश्रमं तथा।
हंसः परमहंसश्च कलौ नैतत् चतुष्टयम् ॥

पुराणसमुच्चये। गृहस्थाः कुलसंपन्नाः प्रख्याता कुलगोत्रतः।
स्वदारनिरताः शान्ता विज्ञेयाः पङ्क्तिपावनाः ॥

देवलः। एकशाखां सकलां च षड्भिरङ्गैरधित्य च।
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित् ॥

मनुः। केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः।
कथंचिदप्यतिक्रामन् पापः शूकरतां व्रजेत् ॥

यमः। आमन्त्र्य ब्राह्मणं यस्तु यथान्यायन्न पूजयेत्।
अतिकृच्छ्रा सुघोरा सुतिर्यग्योनिषु जायते ॥

देवलः। पूर्वनिमन्त्रितोऽन्यस्य यदि कुर्यात्प्रतिग्रहम्।

भुक्ताहारोऽपि वा भुंक्ते सुकृतन्तस्य नश्यति ॥

व्यासः । भुंक्ते श्राद्धन्तु योऽन्यस्य नरोऽन्येन निमन्त्रितः ।

दैवे वाऽप्यथवा पित्र्ये स तु निष्कृष्यते स्वर्गैः ॥

यमः । आमन्त्रितश्च यो विप्रो भोक्तुमन्यत्र गच्छति ।

नरकाणां शतं गत्वा चाण्डालेष्वभिजायते ॥

मनुः । द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा ॥

भोजयेत्सुसमृद्धोऽपि न प्रसज्येत विस्तरम् ॥

सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदः ।

पञ्च तान्विस्तरो हन्ति तस्मान्नेहेतविस्तरम् ॥

ब्राह्मेऽपि । यस्माद्ब्राह्मणबाहुल्याद्दोषो बहुतरो भवेत् ।

श्राद्धनाशो मौननाशः श्राद्धतन्त्रस्य विस्मृतिः ॥

उच्छिष्टोच्छिष्टसंसर्गो निन्दा दातृषु भोक्तृषु ॥

ब्रह्मपुराणे । पयोमूलफलैः शाकैः कृष्णपक्षे तु सर्वदा ।

पराधीनः प्रवासी च निर्धनो वापि मानवः ।

मनसा भावशुद्धेन श्राद्धे दद्यात्तिलोदकम् ॥

यमः। पुनर्भोजनमध्वानम्भाराध्ययनमैथुनम्।
सन्ध्याम्प्रतिग्रहं होमं श्राद्धभोक्ताऽष्ट वर्जयेत्॥

मत्स्यपुराणे। पुनर्भोजनमध्वानम्पानमायासमैथुनम्।
श्राद्धकृच्छ्राद्धभुक्चैव सर्वमेतद्विवर्जयेत्॥
स्वाध्यायङ्कलहं चैव दिवा स्वापन्तथैव च॥
दन्तधावनताम्बूलं स्निग्धस्नानमभोजनम्।
रत्यौषधपरान्नञ्च श्राद्धकृत्सप्त वर्जयेत्॥
श्राद्धोपवासदिवसे खादित्वा दन्तधावनम्।
गायत्रीशतसम्पूतमम्बु प्राश्य विशुध्यति॥

यमः। आमन्त्रितस्तु यः श्राद्धे अध्वानम्प्रतिपद्यते।
भ्रमन्ति पितरस्तस्य तम्मासं पांसुभोजिनः।

याज्ञवल्क्यः। अध्वनीनो भवेदश्वः पुनर्भोजी तु वायसः।
होमकृन्नेत्ररोगी स्यात्पाठादायुः प्रहीयते॥
दानं निष्फलतामेति प्रतिग्राही दरिद्रताम्।
कर्मकृज्जायते दासो मैथुनी शूकरो भवेद्॥

शातातपः ॥ श्राद्धं कृत्वापरश्राद्धे भुंजते ये तु मोहिताः ।
पतन्ति पितरस्तेषां लुप्तपिण्डोदकक्रियाः ॥

अन्ये च नियमास्तत्र वक्ष्यन्ते ते च श्राद्धप्राधान्ये गौणत्वे च न्यायबाधिताः क्वापि केऽपि न भवन्ति ॥

रक्षन्ति राक्षसान्दर्भास्तिला रक्षन्ति चासुरान् ।
वेदविद्रक्षयेच्छ्राद्धं यतीनां दत्तमक्षयम् ॥
दर्भाभावे तु काशाः स्युः काशाः कुशसमाः स्मृताः ।
काशाभावे गृहीतव्या अन्ये दर्भा यथोचिताः ॥
कुशकाशशरादूर्वा यवगोधूमवल्वसाः ।
सुवर्णं रजतं ताम्रन्दशदर्भाः प्रकीर्तिताः ॥
स्नाने दाने तथा होमे स्वाध्याये तर्पणेऽपि च ॥
वामहस्तधृतान्दर्भान् गृहे रंगवलींस्तथा ।
ललाटे तिलकंदृष्ट्वा निराशाः पितरो गता ॥
शमीकाष्मर्यशल्लाश्च कदम्बो वारणस्तथा ।
पञ्चासनानि शस्तानि श्राद्धे वा देवतार्चने ॥
श्रीपर्णी वरुणक्षीरीजम्बूकाम्रकदम्बजम् ।

सप्तमं वाकुलम्पीठं पितॄणां दत्तमक्षयम् ॥

छंदोगपरिशिष्टे। अनन्तर्गर्भिणं साग्रं कौशन्द्विदलमेव च।

प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचिद् ॥

अक्रोधनैः शौचपरैस्सततम्ब्रह्मचारिभिः।

भवितव्यम्भवद्भिश्च मया च श्राद्धकारिणा ॥

महाभारते। विद्यावेदव्रतस्नाता ब्राह्मणाः सर्व एव हि।

सदाचारपराश्चैव विज्ञेयाः सर्वपावनाः।

पाङ्क्त्यांस्तु प्रवक्ष्यामि ज्ञेयास्तु पङ्क्तिपावनाः।

तृणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित्।

ब्रह्मदेयानुसंतानश्छन्दोगो ज्येष्ठसामगः ॥

मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः।

ऋतुकालाभिगामी च धर्मपत्नीषु यः सदा।

वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत।

अथर्वशिरसोऽध्येताब्रह्मचारी यतव्रतः।

सत्यवादी धर्मशीलः स्वकर्मनिरतश्च यः ॥

ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः ।
मखेषु च समन्त्रेषु भवन्त्यवभृथप्लुताः ॥
अक्रोधना चपलाः क्षान्ता दान्ता जितेन्द्रियाः ।
सर्वभूतहिता ये च श्राद्धेष्वेतान्निमन्त्रयेत् ।
अगस्त्यं भृंगीराजं च तुलसीशतपत्रिका ।
तिलं च तिलपुष्पं च षडेते पितृवल्लभा ॥
कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः ।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसंपदः ॥
दातारो वोऽभिवर्धन्तां वेदाः संततिरेव च ।
श्रद्धा च नोमाविगमद्बहुदेयं च नोऽस्त्विति ॥
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् ॥
मनुः । पतिव्रता धर्मपत्नी पितृपूजनतत्परा ।
मध्यमं तु ततः पिण्डमद्यात्सम्यक्सुतार्थिनी ॥
आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम् ।

धनवन्तं प्रजावन्तं सात्विकं धार्मिकं तथा ॥

ऋषिभ्यः पितरो जाताः पितृभ्यो देवमानवाः ।
देवेभ्यस्तु जगत्सर्वं चरं स्थाण्वनुपूर्वशः ॥

# भक्ष्याभक्ष्यप्रकरणम् ।

श्रुतिः । मद्यं मांसं च लशुनं पलाण्डुं शिग्रुमेव च ।
श्लेष्मातकं विड्वराहमभक्ष्यं वर्जयेन्नरः ॥

याज्ञवल्क्यः । उदक्यास्पृष्ट संघुष्टं पर्यायान्नं च वर्जयेत् ।
गोघ्रातं शकुनोच्छिष्टं पदास्पृष्टं च कामतः ॥
अनर्चितं वृथा मांसं केशकीटसमन्वितम् ।
शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् ॥
अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसं स्थितम् ।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥
संधिन्यनिर्दशावत्सा गोपयः परिवर्जयेत् ।

औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम् ॥

देवतार्थं हविः शिग्रुं लोहितान्व्रश्चनांस्तथा ।

अनुपाकृतमांसानि विडजानि कवकानि च ॥

वृथाकृसरसंयाव पायसाऽपूपशष्कुलीः ॥

सर्वान्कामानवाप्नोति हयमेधफलं तथा ।

गृहेऽपि निवसन्विप्रो मुनिर्मांसविवर्जनात् ॥

शंखः । ' न पापीयसोऽन्नमश्नीयान्न द्विःपक्वं न शुक्तं न पर्युषितं अन्यत्ररागखाण्डवचुक्रदधिगुडगोधूमयवपिष्टविकारेभ्यः ' ॥

' अमेध्यपतितचण्डालपुल्कसरजस्वलाकुनखिकुष्ठिसंस्पृष्टान्नं वर्जयेत् ' ॥

' ब्राह्मणान्नंददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् ।

उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेत् ॥

वसिष्ठः । ' अपूपधानाकरम्भसक्तुयावकतैलपायसशाकानि शुक्तानि वर्जयेत् ' ॥

मनुः । अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति ॥

# ब्राह्मणमाहात्म्यप्रकरणम् ।

याज्ञवल्क्यः । तपस्तप्त्वा सृजद्ब्रह्मा ब्राह्मणान्वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥
सर्वस्य प्रभवो विप्राः श्रुताध्ययनशीलिनः ।
तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ॥
न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥

मनुः । संमानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव ।
अमृतस्येव चाकांक्षेदवमानस्य सर्वदा ॥
सुखं ह्यवमतः शेते सुखं च प्रतिबुध्यते ।
सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यति ॥

अभिमानं सुरापानं गौरवं तत्र रौरवं ।
प्रतिष्ठा सुकरी विष्ठा त्रिणी त्यक्त्वा सुखी भव ॥
स्नेहमूलानि दुःखानि व्याधयो रसमूलकाः ।
लोभमूलानि पापानि त्रिणि त्यक्त्वा सुखी भव ॥

श्री भगवानुवाच ।

भागवते । न ब्राह्मणैस्तुलये भूतमन्यत्पश्यामि विप्राः किमतः परंतु ।

यस्मिन्नृभिः प्रहुतं श्रद्धयाहमश्नामि कामं न तथाग्निहोत्रे ।
ब्राह्मणो जन्मना श्रेयान्सर्वेषां प्राणिनामिह ।
तपसा विद्यया तुष्ट्या किमु मत्कलया युतः ॥
न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् ।
सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ॥
दुष्प्रज्ञा अविदित्वैवमवजानन्त्यसूयवः ।
गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः ॥
चराचरमिदं विश्वं भावा ये चास्य हेतवः ।

मद्रूपाणीति चेतस्याधत्ते विप्रो मदीक्षया ॥
तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन्मच्छ्रद्धयाऽर्चय ।
एवं चेदर्पितीऽस्यद्धा नान्यथा भूरिभूतिभिः ॥

मनुः । वैशेष्यात्प्रकृतिश्रैष्ठ्यान्नियमस्य च धारणात् ।
संस्कारस्य विशेष्याच्च वर्णानां ब्राह्मणः प्रभुः ॥
जन्मना जायते शुद्धः संस्कारैर्द्विज उच्यते ॥
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥
उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥
' ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ' ॥
ब्राह्मस्य जन्मनः कर्ता स्वधर्मस्य च शासिता ।
बालोऽपि विप्रो वृद्धस्य पिता भवति धर्मतः ॥
विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः ।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥

न तेन वृद्धो भवति येनास्य पलितं शिरः।
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः॥

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत्॥

एवं यद्यप्य निष्टेषु वर्त्तन्ते सर्वकर्मसु।
सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तत्॥

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनोलोहमुत्थितम्।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति॥

---

## दानप्रकरणम्।

याज्ञवल्क्यः। यावद्वत्सस्य पादौ द्वौ मुखं योन्यां च दृश्यते।
तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति॥

श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम्।
पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत्॥

गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ।
नापात्रे विदुषा किंचिदात्मनः श्रेय इच्छता ॥

दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।
याचिते नापि दातव्यं श्रद्धापूतं स्वशक्तितः ॥

विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ।
गृह्णन्प्रदातारमधो नयत्यात्मानमेव च ॥

प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम् ।
ये लोका दानशीलानां स तानाप्नोति पुष्कलान् ॥

कुशाः शाकं पयोमत्स्या गन्धाः पुष्पं दधि क्षितिः ।
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च ॥

अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः ।
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विषः ॥

देवतातिथ्यर्चनकृते गुरुभृत्यार्थमेव वा ।
सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥

मनुः । एधोदकं मूलफलमन्नमभ्युद्यतं च यत् ।

सर्वतः प्रतिगृह्णीयान्मध्वथा भयदक्षिणाम् ॥
तीलधेनुर्गजोवाजी प्रेतान्नमजिनं मणिः ।
सुरभिः सूयमाना च घोराः सप्तप्रतिग्रहाः ॥

पाराशरः । अभिगम्य कृते दानं त्रेतास्वाहूय दीयते ।
द्वापरे याचमानाय सेवया दीयते कलौ ॥
अभिगम्योत्तमं दानमाहूयैव तु मध्यमम् ।
अधमं याचमानाय सेवादानं तु निष्फलम् ॥

भगवद्गीता । अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्यनो इह ॥
दातव्यमितियद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्विकं स्मृतम् ॥
यज्ञोदानतपश्चैव पावनानि मनीषिणाम् ॥
धर्ममर्थं च कामं च व्रीडाहर्षभयानि च ।
अधिष्ठानानि दानानां षडेतानि प्रचक्षते ॥
सीदंश्चेत्प्रतिगृह्णीयाद् ब्राह्मणेभ्यस्ततो नृपात् ।

ततस्तु वैश्यशूद्रेभ्यः शंखस्य वचनं यथा ॥

यत्तु शाशीकृतं धान्यं खले क्षेत्रेऽथवा भवेत्।

शूद्रादपि गृहितव्यमित्यांगिरसभाषणम् ॥

खलयज्ञे विवाहे च सक्रांतौ ग्रहणे तथा।

पुत्रजन्मे व्यतीपाते दत्तं भवति चाक्षयम् ॥

अदत्तदानाच्च भवेद्दरिद्रो दरिद्रभावाच्च करोति पापम्।

पापप्रभावान्नरके प्रयाति पुनर्दरिद्रः पुनरेव पापी ॥

यतिनां कांचनं दत्वा ताम्बुलं ब्रह्मचारिणाम्।

चौराणामभयं दत्वा दातापि नरकं व्रजेत् ॥

॥ इति दानप्रकरणम् ॥



# द्रव्यशुद्धिप्रकरणम्।

याज्ञवल्क्यः। कालोऽग्निः कर्ममृद्वायुर्मनो ज्ञानं तपो जलम्।

पश्चात्तापो निराहारः सर्वेऽमी शुद्धिहेतवः ॥

अकार्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत्।

शोध्यस्य मृच्च तोयं च सन्यासो वै द्विजन्मनाम् ॥
तपो वेदविदां क्षान्तिर्विदुषां वर्ष्मणो जलम् ।
जपः प्रच्छन्नपापानां मनसः सत्यमुच्यते ॥
भूतात्मनस्तपो विद्ये बुद्धेर्ज्ञानं विशोधनम् ।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥

मनुः । सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः ।
सर्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थमादृतः ॥
एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः ।
अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत् ॥
ख्यापने नानुतापेन तपसाऽध्ययनेन च ।
पापकृन्मुच्यते पापात्तथादानेन चापदि ॥
ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् ।
वैश्यस्य तु तपो वार्ता तपः शूद्रस्य सेवनम् ॥
ऋषयः संयतात्मानः फलमूलानिलाशनाः ।
तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम् ॥

यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम् ।
सर्वं तु तपसा साध्यं तपो हि दुरतिक्रमम् ॥
महापातकिनश्चैव शेषाश्चाकार्यकारिणः ।
तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः ॥
अकुर्वन्विहितं कर्म निन्दितं च समाचरन् ।
प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः ॥
न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत कर्हिंचित् ।
यजमानो हि भिक्षित्वा चंडालः प्रेत्य जायते ॥
यज्ञार्थं भिक्षित्वा यो न सर्वं प्रयच्छति ।
स याति भासतां विप्रः काकतां वा शतं समाः ॥
देवस्वं ब्राह्मणस्वं वा लोभेनोपहिनस्ति यः ।
स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ॥
असिजिवी मशिजिवी देवलो ग्रामयाचकः ।
धावकः पाचकश्चैव षडेते ब्राह्मणाधमाः ॥

याज्ञवल्क्यः । सौवर्णराजताब्जानामूर्ध्वपात्रग्रहाश्मनाम् ।
शाकरज्जु मूलफलवासो विदलचर्मणाम् ॥
पात्राणां चमसानां च वारिणा शुद्धिरिष्यते ।
चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा ॥
स्फ्यशूर्पाऽजिन धान्यानां मुसलोलूखलाऽनसाम् ।
प्रोक्षणं संहतानां च बहूनां धान्यवाससाम् ॥
तक्षणं दारुशृङ्गास्थ्नां गोवालैः फलसंभुवाम् ।
मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ॥
सोषैरुदकगोमूत्रैः शुद्ध्यत्याविककौशिकम् ।
सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा ॥
सगौरसर्षपैः क्षौमं पुनः पाकान्महीमयम् ।
कारुहस्तः शुचिः पण्यं भैक्षं योषिन्मुखं तथा ॥
भूशुद्धिर्मार्जनं दाहात्कालाद्गोक्रमणात्तथा ।
सेकादुल्लेखनाल्लेपाद्गृहं मार्जनलेपनात् ॥
गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते ।

सलिलं भस्ममृद्वापि प्रक्षेप्तव्यं विशुद्धये ॥
त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः ।
भस्माद्भिः कांस्यलोहानां शुद्धिः प्लावोद्रवस्य तु ॥
अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धादिकर्षणात् ।
वाक्शस्तमम्बुनिर्णिक्तमज्ञातं च सदा शुचि ॥
शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ॥
रश्मिरग्नी रजश्छाया गौरश्वो वसुधानिलः ।
विप्रुषो मक्षिकाः स्पर्शे वत्सः प्रस्नवने शुचिः ॥
अजाश्वयोर्मुखं मेध्यं न गोर्न नरजामलाः ।
पन्थानश्च विशुध्यन्ति सोमसूर्याशु मारुतैः ॥
मुखजा विप्रुषो मेध्यास्तथाचमनबिन्दवः ।
श्मश्रुचास्य गतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥
रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतेनैव शुद्ध्यन्ति पक्वेष्टकचितानि च ॥

पाराशरः। वापीकूपतडागेषु दूषितेषु कथञ्चन।
उद्धृत्य वै घटशतं पञ्चगव्येन शुद्ध्यति॥
अस्तंगते यदा सूर्ये चण्डालं पतितं स्त्रियम्।
सूतिकां स्पृशतश्चैव कथं शुद्धिर्विधियते॥
जातवेदः सुवर्णञ्च सोममार्गं विलोक्य च।
ब्राह्मणानुमतश्चैव स्नानं कृत्वा विशुद्ध्यति॥
गावाघ्रातानि कांस्यानि श्वकाकोपहतानि च।
शुद्ध्यन्ति दशभिः क्षारैः शूद्रोच्छिष्टानि यानि च॥
गंडूषं पादशौचं कृत्वा वै कांस्यभाजने।
षण्मासान्भुवि निक्षिप्य उद्धृत्य पुनराहरेत्॥
वेणुवल्कलचीराणां क्षौमकार्पासवाससाम्।
और्णनेत्रपटानां च प्रोक्षणाच्छुद्धिरिष्यते॥
मुञ्जोपस्करशूर्पाणां शाणस्य फलचर्मणाम्।
तृणकाष्ठस्य रज्जूनामुदकाभ्युक्षणं मतम्॥

तूलिकाद्युपधानानि रक्तवस्त्रादिकानि च।
शोषयित्वार्कतापेन मोक्षणाच्छुद्धितामियुः॥
मार्जारमक्षिकाकीटपतंगकृमिदर्दुराः।
मेध्यामेध्यं स्पृशन्तोपि न दोषो मनुरब्रवीत्॥
महीं स्पृष्ट्वाऽगतं तोयं याश्चाप्यन्योन्यविप्रुषः।
भुक्तोच्छिष्टं तथा स्नेहं नोच्छिष्टं मनुरब्रवीत्॥
ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने।
मधुपर्के च सोमे च नोच्छिष्टं धर्मतो विदुः॥
अदुष्टा सन्तता धारा वातोद्धूताश्च रेणवः।
स्त्रियोवृद्धास्तथा वाला न दुष्यन्ति कदाचन॥
देशभंगे प्रवासे वा व्याधिषु व्यसनेष्वपि।
रक्षेदेव स्वदेहादि पश्चाद्धर्मं समाचरेत्॥
येनकेन च धर्मेण मृदुना दारुणेन च।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत्॥
आपत्काले तु निस्तिर्णे शौचाचारं विचिन्तयेत्।

शुद्धिं समुद्धरेत्पश्चात् स्वस्थो धर्मं समाचरेत् ॥
एकादशेऽन्हि सम्प्राप्ते य स्य नोत्सृज्यते वृषः।
प्रेतत्वं हि स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥



# प्रायश्चितप्रकरणम् ॥

याज्ञवल्क्यः। प्रायश्चित्तमकुर्वाणः पापेषु निरतानराः।
अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणान् ॥
उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा।
पयसावापिमासेन पराकेणाथवा पुनः ॥
प्राणायामशतं कार्यं सर्वपापापनुत्तये।
उपपातकजातानामनादिष्टस्यचैव हि ॥

पाराशरः। शुद्रान्नरसपुष्टस्याप्यधीयानस्य नित्यशः।
जपतो जुहतो वापि गतिरूर्ध्वा न विद्यते ॥
शूद्रान्नं शूद्रसंपर्कः शूद्रेण च सहासनम्।
शूद्राज्ज्ञानागमश्चापि ज्वलन्तमपि पातयेत् ॥

मृतसूतकपुष्टांगं द्विजं शूद्रान्नभोजिनम् ।
अहं तन्न विजानामि कां कां योनिं गमिष्यति ॥
गृध्रो द्वादशजन्मानि दशजन्मानि सूकरः ।
श्वयोनौ सप्त जन्मानि इत्येवं मनुरब्रवीत् ॥
अग्निकार्यात्परिभ्रष्टाः संध्योपासनवर्जिता ॥
वेदं चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ॥
आसनाच्छयनाद्यानात्संभाषात्सहभोजनात् ।
संक्रामन्तीह पापानि तैलबिन्दुरिवांभसि ॥
चान्द्रायणं यावकश्च तुलापुरुष एव च ।
गवां चैवानुगमनं सर्वपापप्रणाशनम् ॥
पिण्याकश्च तथा चामं तक्रं चोदकसक्तवः ।
त्रिरात्रमुपवासश्च तुलापुरुष उच्यते ॥
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ।
तुलापुरुष इत्येव ज्ञेयः पञ्चदशाहिकः ॥
मनुः। संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्यौनान्न तु यानासनाशनात् ॥
पाराशरः। युगे युगे तु ये धर्मास्तेषु तेषु च ये द्विजाः ।

तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः ॥

दुःशीलोपि द्विजः पूज्यो न तु शूद्रो जितेन्द्रियः ।
कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम् ॥

ये पठन्ति द्विजा वेदं पञ्चयज्ञरताश्च ये ।
त्रैलोक्यं तारयन्ते ते पञ्चेन्द्रियरता अपि ॥

उपवासैर्व्रतैः पुण्यैः स्नानसन्ध्यार्चनादिभिः ।
जपहोमदयादानैः शुद्ध्यन्ते ब्राह्मणादयः ॥

आकाशं वायुरग्निश्च मेध्यं भूमिगतं जलम् ।
न दुष्यन्ति च दर्भाश्च यज्ञेषु चमसा तथा ॥

चातुर्वर्ण्यस्य नारीणां कृच्छ्रं चान्द्रायणं व्रतम् ।
यथा भूमिस्तथा नारितस्मात्तां न तु दूषयेत् ॥

बोधायनः । शरीरं बलमायुश्च वयः कालं च कर्म च ।
समीक्ष्य धर्मविद्बुद्ध्या प्रायश्चित्तं प्रकल्पयेत् ॥

बृहस्पतिः । केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः ।
युक्तिहीनविचारेण धर्महानिः प्रजायते ॥

# व्रतविधिप्रकरणम् ।

याज्ञवल्क्यः । ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता ।
अहिंसास्तेयमाधुर्ये दमश्चेति यमाः स्मृताः ॥
स्नानं मौनोपवासेज्या स्वाध्यायोपस्थनिग्रहाः ।
नियमा गुरुशुश्रूषा शौचाक्रोधाप्रमादता ॥
विधिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः ।
शरीरशोषणं प्राहुस्तपसां तप उत्तमम् ॥
यानि कानि च पापानि गुरोर्गुरुतराणि च ।
कृच्छ्रातिकृच्छ्रचान्द्रैयैः शोध्यन्ते मनुरब्रवीत् ॥
पाराशरः । गोमूत्रं गोमयं क्षीरं दधिः सर्पिः कुशोदकम् ।
निर्दिष्टं पञ्चगव्यंतु प्रत्येकं कायशोधनम् ॥
गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चापि गोमयम् ।
पयः कांचनवर्णाया नीलायाश्च तथा दधि ॥
घृतं च कृष्णवर्णायाः सर्वं कापिलमेव च ।
अलाभे सर्ववर्णानां पञ्चगव्येष्वयं विधिः ॥
गोमूत्रं माषकास्त्वष्टौ गोमयस्य तु षोडश ।

क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्तिताः ।
गोमूत्रवद्धृतस्येष्टस्तदर्धं तु कुशोदकम् ।
गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्याय स्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ।
पञ्चगव्यमृचापूतं होमयेदग्निसंनिधौ ॥
सप्तपत्राश्च ये दर्भा अच्छिन्नाग्राः शुचित्विषः ।
एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ॥
इरावती इदं विष्णुर्मानस्तोके च शंवतीः ।
एताभिश्चैव होतव्यं हुतशेषं पिबेद्द्विजः ॥
प्रणवेन समालोड्य प्रणवेनाभिमन्त्र्य च ।
प्रणवेन समुद्धृत्य पिबेत्तत्प्रणवेन तु ।
मध्यमेन पलाशस्य पद्मपत्रेण वा पिबेत् ॥
स्वर्णपात्रेण रौप्येण ब्राह्मतीर्थेन वा पुनः ।
यत्त्वगस्थिगतं पापं देहे तिष्ठति मानवे ।
ब्रह्मकूर्चोपवासस्तु दहत्यग्निरिवेन्धनम् ॥

याज्ञवल्क्यः । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
जग्ध्वापरेह्न्युपवसेत्कृच्छ्रं सान्तपनं चरन् ॥
पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः ।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥
पर्णोदुम्बरराजीव बिल्वपत्रकुशोदकैः ।
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः ॥
तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ॥
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः॥
एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैवायं पादकृच्छ्रः प्रकीर्तितः ॥
यथा कथंचित्त्रिगुणः प्राजापत्योऽयमुच्यते ।
अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः ॥
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् ।
द्वादशाहोपवासेन पराकः परिकीर्तितः ॥
पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ।
एकरात्रोवासपश्च कृच्छ्रः सौम्योऽयमुच्यते ॥

एवं त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ।
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः ॥
तिथिवृद्ध्याचरेत्पिण्डान् शुक्ले शिख्यण्डसंमितान् ।
एकैकं ह्रासयेत्कृष्णे पिण्डं चान्द्रायणं चरन् ॥
यथा कथंचित्पिण्डानां चत्वारिंशच्छतद्वयम् ।
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥
कुर्यात्त्रिषवणस्नायी कृच्छ्रचान्द्रायणं तथा ॥
पवित्राणि जपेत्पिण्डान्गायत्र्या चाभिमन्त्रयेत् ॥
अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु ॥
धर्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम् ॥



## ॥ एकादशीव्रतप्रकरणम् ॥

स च एकादशीव्रतं चतुर्विधाश्रमाणां वर्णानांश्च कर्तुमधिकारो वर्तते। अकर्णे प्रत्यवायो दृश्यते । स च अथर्ववेदे श्रीमद्भागवते अध्यात्मरामायणे च भारतादि सद्ग्रंथैरन्यैश्च श्रुति

स्मृतिभिर्वाल्मिकव्यासवसिष्ठविश्वामित्रकपिलादिमहर्षिभिः महता माहात्म्येन मानितम् ।

स्नानं दानं जपे होमं यदस्यां कुरुते नरः ।
तत्सर्वं चाक्षयं प्रोक्तमेतत्कृष्णस्य भाषितम् ॥
न भोक्तव्यं न भोक्तव्यं न भोक्तव्यं हरेर्दिने ॥
एकादशीदिने योऽन्नं भूंक्ते पापं भूनक्ति सः ।
इह लोके स चाण्डालो मृतः प्राप्नोति दुर्गतिम् ॥
कांस्यं मांसं मसूरान्नं चणकान्कोद्रवांस्तथा ।
शाकं मधु परान्नं च पुनर्भोजनमैथुने ।
मुमुक्षुः व्रतकर्त्ता च दशम्यां दश वर्जयेत् ॥
द्यूतं क्रीडां च निद्रां च ताम्बूलं दंतधावनम् ।
परापवादं पैशुन्यं पतितैः सह भाषणम् ।
क्रोधं चैवानृतं वाक्यमेकादश्यां विवर्जयेत् ॥
कास्यं मांसं मसूरांश्च क्षौद्रं वितथभाषणम् ।
व्यायामं च प्रयासं च पुनर्भोजनमैथुने ।
क्षौद्रं तैलं परान्नंच द्वादश्यां परिवर्जयेत् ।

शान्तैर्दानपरैश्चैव अर्चद्भिश्च तथा हरिम् ॥

कुर्वद्भिर्जागरं रात्रौ यैर्नरैः समुपोषिता ॥

आत्मद्रोहकृतस्तैस्तु यैरेषा न उपोषिता।

पापात्मानो दुराचारा दुष्टास्ते नात्रसंशयम् ॥

वृन्ताकं च कलिंगं च बिल्वोदुंबरभिस्सटाः।
उदरे यस्य जीर्यंते तस्य दूरतरो हरिः ॥

कूष्मांडं राजमाषाश्च मूलकं गृजनं तथा।
करमर्दं चेक्षुदंडं च शिग्रुं मधुवल्लिस्तथा ॥

मसुरं बहुबीजं च वृन्ताकं चैव वर्जयेत्।
विशेषाद्बदरीं धात्रीमलाबुं चिंचणीं त्यजेत् ॥
जीर्णधात्रीफलं ग्राह्यं जीर्णा ग्राह्या च चिंचणी।
नित्यान्येतानि विप्रेन्द्र व्रतान्याहुर्मनीषिणः ॥
श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा।
दुग्धमाश्वयुजे मासि कार्तिके द्विदलं त्यजेत् ॥

अतिबालवृद्धातुराणां प्रत्यवायो न दृश्यते। तथापि सर्वैर्वा श्रेयेच्छुमुमुक्षुभिः भव्यभावीसत्संस्कारप्राप्त्यर्थमवश्यं श्रद्धया करणीयम् ॥

यथोक्तं सुकृतं यस्तु विधिवत्कुरुते नरः ।
स्वल्पं मुनिवर श्रेष्ठ मेरुतुल्यं भवेत्फलम् ॥
विधिहीनं तु यः कुर्यात्सुकृतं मेरुमात्रकम् ।
अणुमात्रं न चाप्नोति फलं धर्मस्य नारद ॥
सन्ध्याहीने व्रतभ्रष्टे नास्तिके हैतुके शठे ।
नैतेषां तिष्ठते देहे धर्मशास्त्रविदूषके ॥
परदाररते मूर्खे कृतघ्ने वंचके तथा ।
धर्मो न तिष्ठते देहे एतेषामपि देहिनाम् ॥
हविष्यान्नं च भुंजितं अक्षारलवणं तथा ।
भूमिशायि ब्रह्मचारि भवेच्च दशमीदिने ॥
जलपानेन वा कुर्याद्दुग्धाहारेण वान्यथा ।
नानृतं हि वदेद्वाक्यं सत्यपूतं वचोवदेत् ।
रजस्वलां न स्पृशेत् न निंद्येद्ब्राह्मणं गुरुम् ॥
सनत्कुमारः । न करोति हि यो मूढ एकादश्यामुपोषणं ।
स नरो नरकं याति रौरवं तमसावृतम् ॥

नारदीये। यानिकानि च पापानि ब्रह्महत्या समानि च।
अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे॥

## यज्ञोपवीतविधिः।

यज्ञोपवीतलक्षणन्तु छन्दोगपरिशिष्टे।
त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतम्।
त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते।
वामावर्तं त्रिगुणं कृत्वा प्रदक्षिणावृत्तं नवगुणं विधाय तदेव त्रिसरं कृत्वा ग्रन्थिमेकं विदध्यात्।

यथा। पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम्।
तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम्॥
वामस्कंधे धृते नाभिहृत्पृष्ठवंशयोर्धृतम्॥
यथाकटिपर्यन्तं प्राप्नोति तावत्परिमाणं कर्तव्यमित्यर्थः।
कार्पासक्षौमगोवालशाणवल्कतृणादिकम्।
सदा सम्भवतो धार्यमुपवीतं द्विजातिभिः॥ १॥

शुचौदेशे शुचिः सूत्रं संहताङ्गुलिमूलके ।
आवेष्ट्य षण्णवत्या तत् त्रिगुणीकृत्य यत्नतः ॥ २ ॥
अब्लिङ्गकैस्त्रिभिः सम्यक् प्रक्षाल्योर्ध्ववृत्तं च तत् ।
अप्रदक्षिणमावृत्तं सावित्र्या त्रिगुणीकृतम् ॥ ३ ॥
अधःप्रदक्षिणावृत्तं समं स्यान्नवसूत्रकम् ॥
त्रिरावेष्ट्य दृढं बध्वा हरिब्रह्मेश्वरान्नमेत् ॥ ४ ॥
यज्ञोपवीतं परममिति मन्त्रेण धारयेत् ॥
सूत्रं सलोमकं चेत्स्यात्ततः कृत्वा विलोमकम् ॥ ५ ॥
सावित्र्या दशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुक्षयेत् ।
विच्छिन्नं वाऽप्यधोयातं भुक्त्वा निर्मितमुत्सृजेत् ॥ ६ ॥
स्तनादूर्ध्वमधोनाभेर्न धार्यं तत्कथञ्चन ।
ब्रह्मचारिणी एकं स्यात्स्नातस्य द्वे बहूनि वा ॥ ७ ॥
तृतीयमुत्तरीयं वा वस्त्राभावे तदिष्यते ।
ब्रह्मसूत्रे तु सव्येंऽसे स्थिते यज्ञोपवीतिता ॥ ८ ॥
प्राचीनावीतिताऽसव्ये कण्ठस्थे तु निवीतिता ॥
वस्त्रं यज्ञोपवीतार्थं त्रिवृत्सूत्रं च कर्मसु ॥ ९ ॥

रक्षाबंधनमंत्रः। येन बद्धोः बलीराजा दानवेन्द्रो महाबलः।

तेन त्वामपि बध्नामि रक्षे मा चल मा चल ॥

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः।

कर्तव्यो रक्षिकाचारो द्विजान्सम्पूज्यशक्तितः ॥

॥ इति यज्ञोपवीतविधिः समाप्ता ॥

# अथानुपनीतधर्माः।

प्रागुपनयनात्कामचारवाद् भक्षाः ॥

नित्यं मद्यं ब्राह्मणोऽनुपनीतोपि वर्जयेत् ॥

ब्रह्मपुराणे—मातापित्रोरथोच्छिष्टं बालो भुञ्जनभवेत्सुखी ॥

वृद्धशातातपः शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतं।

रजस्वलादिसंस्पर्शे स्नानमेवकुमारके।

प्राक्चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः।

कुमारस्तु स विज्ञेयो यावन्मौञ्जी निबन्धनम् ॥

बालस्य पञ्चमाद्वर्षाद्रक्षार्थं शौचमाचरेदिति स्मृतेः ॥

। इति अनुपनीतधर्माः ।

## संस्कारप्रकरणम् ॥

जातकर्मादिकाः स्त्रीणां चूडाकर्मान्तिकाः क्रियाः ।

तूष्णीं होमे तु मन्त्रः स्यादिति गोभिलभाषितम् ॥

याज्ञवल्क्यः—तूष्णीमेताः क्रियाःस्त्रीणां विवाहस्तु समन्त्रक इति ॥

मनुः—शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः ।

न केनचित्समसृजच्छन्दसातं प्रजापतिः ।

व्यासः—गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।

नामक्रिया निष्क्रमोऽन्नप्राशनं वपनक्रिया ।

कर्णवेधो व्रतादेशो वेदारंभः क्रियाविधिः ॥

केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः ॥

त्रेताऽग्निसङ्ग्रहश्चैव संस्काराः षोडशस्मृताः ॥

यमः—नवैताः कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रियाः ।

विवाहो मन्त्रतस्तस्याःशूद्रस्यामन्त्रतो दश ॥

हरिभाष्ये:—शूद्रस्य गर्भाधानपुंसवनसीमन्त

जातकर्मनामधेयनिष्क्रमणान्नप्राशनचूडा-

करणविवाहान्ता नवसंस्कारा विहितास्ते च तूष्णीम् ॥

शारंगधरः--द्विजानां षोडशैव स्युः शूद्राणां द्वादशैव हि ।

पञ्चैव मिश्रजातीनां संस्काराः कुलधर्मतः ।

वेदव्रतोपनयनं महानाम्नी महाव्रतम् ।

विना द्वादशशूद्राणां संस्कारा नाममन्त्रतः ।

ब्रह्मपुराणे। विहाहमात्रं संस्कारं शूद्रोऽपि लभतां सदेति ।

व्यासः–शूद्रो वर्णश्च तुर्योऽपि वर्णत्वाद्धर्ममर्हति ।

वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥

मरीचिः–अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥

पराशरेणोक्तम्–दक्षिणार्थन्तु यो विप्रः शूद्रस्य जुहुयाद्धविः ।

ब्राह्मणस्तु भवेच्छुद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥

॥ इति संस्कारप्रकरणम् ॥



# ब्रह्मचारिधर्मप्रकरणम् ।

श्री याज्ञवल्क्यः ।

उपनीयः गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥
स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ।
उपनीय ददद्वेदमाचार्यः स उदाहृतः ॥
एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते ।
एते मान्या यथापूर्वमेभ्यो माता गरीयसी ॥
प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ।
ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे ॥
आषोडशाद्द्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥
अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः ।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ।

पा. सू. ।

'नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्न चैभिर्व्यवहरेयुः ।

ब्रह्मचार्यस्यपोशानकर्म कुरु मा दिवा सुषुप्था वाचं यच्छ समिधमाधेह्यपोशानेति ।

सद्यस्त्वेव गायत्रीं ब्राह्मणा यानुब्रूयादाग्नेयो वै ब्राह्मणः इति श्रुतेः ॥

अधः शाय्यक्षारालवणाशी स्यात् ।

दंडधारणमग्निपरिचरणं गुरुशुश्रूषा भिक्षाचर्या ।

मधुमादसमज्जनोपर्यासनस्त्रीगमनानृतादत्तादानानि वर्जयेत् ॥

स्त्रीशूद्रशवकृष्णशकुनि शुनां चादर्शनमसंभाषा च तैः ॥

शवशूद्रसूतकान्नानि च नाद्यात् ॥

अव्रजोत्य रात्रौ भोजनं ॥ सत्यवदनमेव वा ॥

" मधुमांसांजनोच्छिष्टं शूद्रस्त्रीप्राणिहिंसनं ।

भास्करालोकनाश्लीलपरिवादादि वर्जयेत् "

" पर्युषित तांबूलदंत धावनावसथिकादिवास्वापच्छत्रपादुकागंधमाल्योद्वर्त्तनानुलेपनजलक्रीडाद्यूतनृत्यगीतवाद्यालापादीन्यन्यान्य"पिवर्जनीयानि स्मृतानि ।

कार्या भिक्षा सदा धार्यं कौपीनं कटिसूत्रकं ।
कौपीनसहितं धार्यं खंडं वा वस्त्रपार्श्वयुक् ।
यज्ञोपवीतमजिनं मौंजीं दंडं च धारयेत् ।
नष्टे भ्रष्टे नवं मन्त्रात् धृत्वा भ्रष्टं जले क्षिपेत् ॥
स्मरणं कीर्तनं केलिप्रेक्षणं गुह्यभाषणं ।
संकल्पोऽध्यवसायश्च क्रियानिवृत्तिरेव च ॥
एतन्मैथुनमष्टांगं प्रवदन्ति मनिषिणाः ।
न ध्यातव्यं न वक्तव्यं न स्मर्तव्यं कदाचन ।
एतैरष्टैर्विनिर्मुक्तो यतिर्भवति नेतरः ॥
मनोहराणां भोज्यानां युवतीनां च वाससां ।
वित्तस्यापि च सानिध्याच्चलेच्चित्तं सतामपि ॥
मनुः । स्वभाव एष नारीणां नराणामिह दूषणम् ।
अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः ॥
अविद्वांसमलं लोके विद्वांसमपि वा पुनः ।
प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥
मात्रां स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।

वलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥
न कुर्यात्कर्हिचित्संगं तमस्तीव्रं तितीरिषुः ।
धर्मार्थकाममोक्षाणां यदत्यन्तविघातकम् ॥

श्रीमद्भागवते ॥ नारद उवाच ॥

ब्रह्मचारी गुरुकुले वसन्दान्तो गुरोर्हितम् ।
आचरन्दासवन्नीचो गुरौ सुदृढसौहृदः ॥१॥
सायं प्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमान् ॥
उभे सन्ध्ये च यत्वाग्जपन्ब्रह्मसमाहितः ॥२॥
छन्दांस्यधीयीत गुरोराहूतश्चेत्सुयन्त्रितः ।
उपक्रमेऽवसाने च चरणौ शिरसा नमेत् ॥३॥
मेखलाजिनवासांसि जटादण्डकमण्डलून् ।
विभृयादुपवीतं च दर्भपाणिर्यथोदितम् ॥४॥
सायं प्रातश्चरेद्भैक्ष्यं गुरवे तन्निवेदयेत् ।
भुञ्जित यद्यनुज्ञातो नोचेदुपवसेत्क्वचित् ॥५॥
सुशीलो मितभुग्दक्षः श्रद्दधानो जितेन्द्रियः ।

यावदर्थं व्यवहरेत्स्त्रीषु स्त्रीनिर्जितेषु च ॥६॥
वर्जयेत्प्रमदागाथामगृहस्थो बृहद्व्रतः।
इन्द्रियाणि प्रमाथीनि हरन्त्यपि यतेर्मनः ॥७॥
केशप्रसाधनोन्मर्दस्नपनाभ्यञ्जनादिकम्।
गुरुस्त्रीभिर्युवतीभिः कारयेन्नात्मनो युवा ॥८॥
नन्वग्निः प्रमदा नाम घृतकुम्भसमः पुमान्।
सुतामपि रहो जह्यादन्यदायावदर्थकृत् ॥९॥
कल्पयित्वात्मना यावदाभासमिदमीश्वरः।
द्वैतं तावन्न विरमेत्ततो ह्यस्य विपर्ययः ॥१०॥
एतत्सर्वं गृहस्थस्य समाम्नातं यतेरपि।
गुरुवृत्तिर्विकल्पेन गृहस्थस्यर्तुगामिनः ॥११॥
अञ्जनाभ्यञ्जनोन्मर्दस्त्र्यवलेखामिषंमधु।
सगंधलेपालंकारांस्तनेयुर्ये धृतव्रताः ॥१२॥
उषित्वैवं गुरुकुले द्विजोधीत्यावबुध्य च।
त्रयीं सांगोपनिषदं यावदर्थं यथाबलम् ॥१३॥

दत्त्वावरमनुज्ञातो गुरोः कामं यदीश्वरः ॥
गृहं वनं वा प्रविशेत्प्रव्रजेत्तत्र वा वसेत् ॥१४॥
अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम् ।
भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत् ॥१५॥
एवं विधो ब्रह्मचारी वानप्रस्थो यतिर्गृही ।
चरन्विदितविज्ञानः परं ब्रह्माधिगच्छति ॥१६॥

इति ब्रह्मचारिधर्मप्रकरणम् ॥

---

# गृहस्थाश्रमधर्मप्रकरणम् ।

मनुः । पुरुषस्य स्त्रियाश्चैव धर्म्मे वर्त्मनि तिष्ठतोः ।
संयोगे विप्रयोगे च धर्मान्वक्ष्यामि शाश्वतान् ॥
याज्ञवल्क्यः—अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥
दशपुरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ।
स्फीतादपि न संचारिरोगदोषसमन्वितात् ॥
एतैरेवगुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।
यत्नात्परीक्षितः पुंस्त्वे युवा धीमान्जनप्रियः ॥
ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥
यज्ञस्थ ऋत्विजे दैव आदायार्षस्तु गोद्वयम् ।
चतुर्दशप्रथमजः पुनात्युत्तरजश्च षट् ॥
इत्युक्त्वा चरतां धर्मं सहया दीयतेऽर्थिने ।
सकायः पावयेत्तज्जः षट्षड्वंश्यान्सहात्मना ॥
आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः ।
राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलात् ॥
याज्ञवल्क्यः । व्यभिचाराद्दतौ शुद्धिर्गर्भे त्यागो विधीयते ।
सोमः शौचं ददावासां गन्धर्वश्च शुभांगिरम् ॥

पावकः सर्वमेध्यत्वं मेध्यावै योषितो ह्यतः ॥
आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥
लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ।
यस्मात्तस्मात्स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः ॥
स्त्रीभिर्भर्तृवचः कार्यमेषधर्मः परः स्त्रियाः ।
आशुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः ॥
षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् ।
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् ॥
एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत् ।
सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ॥
पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।
समेऽपुमान्पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः ॥
यथा कामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥

पाराशरः । ऋतुस्नाता तु या नारी भर्त्तारं नोपगच्छति ।
सा मृता नरकं याति विधवा च पुनः पुनः ॥
ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥
दरिद्रं व्याधितं मूर्खं भर्तारं याऽवमन्यते ।
सा शुनी जायते मृत्वा सूकरी च पुनः पुनः ॥
अपृष्ट्वा चैव भर्तारं या नारी कुरुते व्रतम् ॥
सर्वं तद्राक्षसान्गच्छेदित्येवं मनुरब्रवीत् ॥
यत्पापं ब्रह्महत्यायां द्विगुणं गर्भपातने ।
प्रायश्चित्तं न तस्यास्स्यात्तस्यास्त्यागो विधियते ॥
वाग्दाने कृते लौकिकविवाहे वैदिकविवाहे तु न
नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥
मनुः । संतुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च ।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥

जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ।
तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥

मनुः । नोपगच्छेत्प्रमत्तोऽपि स्त्रियमार्तवदर्शने ।
समानशयने चैव न शयीत तया सह ॥
रजसाभिप्लुतां नारीं नरस्य ह्युपगच्छतः ।
प्रज्ञा तेजो बलं चक्षुरायुश्चैव प्रहीयते ॥

मनुः । ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः ॥
इतरेषु तु शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मचर्यद्विषः सुताः ॥
अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्दां विवर्जयेत् ॥

पाराशरः । अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥
प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।

मासि मासि रजस्तस्याः पिबन्ति पितरोऽनिशम् ॥
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥
यस्तां समुद्वहेत् कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्योह्यपांक्तेयः स विप्रो वृषलीपतिः ॥
यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ।
स भैक्ष्यभुग्जपेन्नित्यं त्रिभिर्वर्षैर्विशुद्ध्यति ॥

रजस्वला अन्यत्ज स्वलादिनां स्पर्शं मा कुरु । करोति चेत्विध्युक्तं प्रायश्चितं कुर्यात् ॥

प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति ।
रोगेण यद्रजः स्त्रीणामन्वहन्तु प्रवर्तते ।
ना शुचिस्सा ततस्तेन तत्स्याद्वैकालिकं मलम् ॥
साध्वाचारा न तावत्स्याद्रजो यावत्प्रवर्तते ।
रजोनिवृत्तौ गम्या स्त्री गृहकर्मणि चैव हि ॥

याज्ञवल्क्यः। भर्तृभ्रातृपितृज्ञातिश्वश्रुश्वशुरदेवरैः।
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः॥
रक्षेत्कन्यांपिता विन्नां पतिः पुत्राश्च वार्धके।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं कचित्स्त्रियाः॥
पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः।
हीना न स्याद्विनाभर्त्रा गर्हणीयान्यथा भवेत्॥
ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः।
निषेकाद्याः श्मशानान्तास्तेषां वैमन्त्रतः क्रियाः॥
गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा।
षष्ठेऽष्टमे वा सीमन्तो मास्ये ते जातकर्म च॥
अहन्येकादशेन नाम चतुर्थे मासि निष्क्रमः।
षष्ठेऽन्नप्राशनं मासि चूडा कार्यं यथाकुलम्॥
एवमेनः शमं याति बीजगर्भसमुद्भवम्॥
तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः॥
गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्।

राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥

श्रीमद्भागवते ।

स्त्रीणां नैव तु विश्वासोऽनृतानां कारयेद्बुधः ।
विश्वासे यः स्थितो मूढः स दुःखैः परिभूयते ॥
सुधामयं वाचो या सां कामिनां रसवर्द्धनम् ।
हृदयं क्षुरधाराभं प्रियः को नाम योषिताम् ॥
स्त्रियोह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः ।
घ्नन्त्यल्पार्थेऽपि विश्रब्धं पतिं भ्रातरमप्युत ॥
विधायालीकविश्रम्भमज्ञेषु त्यक्तसौहृदाः ॥
नवं नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः ।
अहो अद्येन्द्रियारामो योषिन्मय्येह मायया ।
गृहितचेताः कृपणः पतिष्ये नरके ध्रुवम् ॥
कोऽतिक्रमोऽनुवर्तन्त्याः स्वभावमिह योषितः
धिङ्मां बताबुधं स्वार्थे यदहं त्वजितेन्द्रियः ॥
शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम् ।

हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम् ॥
न हि कश्चित्प्रियः स्त्रीणामञ्जसा स्वाशिषात्मनाम् ।
पतिं पुत्रं भ्रातरं वा घ्नन्त्यर्थे घातयन्ति च ॥

श्रीमद्भागवते ।

पतिरेव हि नारीणां दैवतं परमं स्मृतम् ।
मानसः सर्वभूतानां वासुदेवः श्रियः पतिः ॥
स एव देवतालिंगैर्नामरूपविकल्पितैः ।
इज्यते भगवान्पुम्भिः स्त्रीभिश्च पतिरूपधृक् ॥
यजन्तेऽनन्यभावेन पतिमात्मानमीश्वरम् ॥
स्त्रीणां च पतिदेवानां तच्छुश्रूषानुकूलता ।
तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम् ॥
संमार्जनोपलेपाभ्यां गृहमंडलवर्तनैः ।
स्वयं च मण्डिता नित्यं परिमृष्टपरिच्छदा ॥
कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च ।
वाक्यैः सत्यैः प्रियैः प्रेम्णा काले काले भजेत्पतिम् ॥

कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः।
मृते भर्तरि पुत्रस्तु वाच्यो मातुररक्षिता ॥
सूक्ष्मेभ्योऽपि प्रसंगेभ्यः स्त्रियोरक्ष्या विशेषतः ॥
द्वयोर्हिं कुलयोः शोकमावहेयुररक्षिताः ॥
इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम्।
यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥
स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च।
स्वं च धर्मं प्रयत्नेन जायां रक्षन्हि रक्षति ॥
पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते।
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥
यादृशं भजते हि स्त्री सुतं सूते तथा विधम्।
तस्मात्प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः ॥
न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम्।
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥
अर्थस्य संग्रहे चेनां व्यये चैव नियोजयेत्।

शौचे धर्मेऽन्नपंक्त्यां च पारिणाह्यस्य वेक्षणे ॥
अरक्षिता गृहेरुद्धाः पुरुषैराप्तकारिभिः ।
आत्मानमात्मनायास्तु रक्षेयुस्ताः सुरक्षिताः ॥
पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नोऽन्यगेहवासश्च नारीसंदूषणानि षट् ॥
नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः ।
सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ॥
पौंश्चल्याश्चलचित्ताश्च निस्नेह्याश्च स्वभावतः ।
रक्षिता यत्नतोऽपीह भर्तृष्वेताविकुर्वते ॥
एवं स्वभावं ज्ञात्वा सां प्रजापति निसर्गजम् ॥
परमं यत्नमातिष्ठेत्पुरुषो रक्षणं प्रति ॥
शय्यासनमलंकारं कामं क्रोधमनार्जवम् ।
द्रोहभावं कुचर्यां च स्त्रीभ्यो मनुरकल्पयत् ॥
नास्ति स्त्रीणां क्रियामन्त्रैरितिधर्मे व्यवस्थितिः ।
निरिन्द्रियाह्य मन्त्राश्च स्त्रियोऽनृतमितिस्थितिः ॥

यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ।
तादृग्गुणा सा भवति समुद्रेणैव निम्नगा ॥
व्यभिचारात्तु भर्तुः स्त्री लोके प्राप्नोति निंद्यताम् ।
शृगालयोनिं चाप्नोति पापरोगैश्च पीडयते ॥
सकृदंशो निपतति सकृत्कन्याप्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सतां सकृत् ॥
प्रजननार्थं स्त्रियः सृष्टाः संतानार्थं च मानवाः ।
तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः ॥
ऋतुकालाभिगामि स्यात् स्वदारनिरतः सदा ।
पर्ववर्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥

सुश्रुतः। सर्पिः क्षीराभ्यां शाल्योदनमभिप्राश्य नात्याशितः
सुखीस्त्रग्वी सुमनाः प्रीणितांगः ॥
आहाराचारचेष्टाभिर्यादृशीभिः समन्वितौ ।
स्त्रीपुंसौ समुपेयातां तयोःपुत्रोऽपि तादृशः ॥
रजस्वलां न गच्छेत गर्भिणीं पतितां तथा ।

शुद्धे शुक्रार्तवे सत्वः स्वकर्मक्लेशनोदितः ॥

मनुः। पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः।
तस्मात्पुत्र इतिप्रोक्तः स्वयमेव स्वयंभुवा ॥
जीवतोर्वाक्यकरणात्प्रत्यब्दं भूरिभोजनात्।
गयायां पिंडदानेन त्रिभिः पुत्रस्य पुत्रता ॥
उत्तमश्चिन्तितं कुर्यात्प्रोक्तकारी तु मध्यमः।
अधमोऽश्रद्धया कुर्यादकर्त्तोच्चरितं पितुः ॥



# रजस्वलाधर्मप्रकरणम्।

वसिष्ठः। रजस्वला त्रिरात्रमशुचिर्भवति सा च नाञ्जीत नाभ्यञ्जीत नाप्सुस्नायादधः शयीत न दिवा स्वप्यात् न ग्रहान्वीक्षेत नाग्निं स्पृशेत् नाश्नीयान्न रज्जुं सृजेत् न च दन्तान्धावयेत् न हसेन्न च किंचिदाचरेत्। अखर्वेण पात्रेण पिबेदञ्जलिना वा पात्रेण लोहितायसेन वेति विज्ञायते।

आंगिरसः। हस्तेऽश्नीयान्मृन्मये वा हविर्भुक् क्षितिशायिनी।
रजस्वला चतुर्थेऽह्नि स्नात्वा शुद्धिमवाप्नुयात्॥
शुद्धा भर्तुश्चतुर्थेऽह्नि स्नाने न स्त्री रजस्वला।
दैवकर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति॥

अत्रिः। रजस्वला यदि स्नाता पुनरेव रजस्वला।
अष्टादश दिनादर्वागशुचित्वं न विद्यते॥
एकोनविंशतेरर्वागेकाहं स्यात्ततोद्व्यहम्।
विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत्॥

धन्वन्तरिः। ऋतौ प्रथमदिवसात्प्रभृति ब्रह्मचारिणी दिवा स्वप्नाञ्जनाश्रुपातस्नानानुलेपनाभ्यंगालंकारमाल्यनखच्छेदनप्रधावनहसनकथनातिशब्दश्रवणावलेखनायासान्परिहरेत्। दर्भसंस्तरशायिनीं करतरुशरावपर्णान्यतमभोजिनीं हविष्याशिनीं त्र्यहं च भर्ता संरक्षेत्।

मैथुनं मानसं वापि वाचिकं देवतार्चनम्।

वर्जयेच्च नमस्कारं देवतानां रजस्वला ॥
स्नात्वान्यं पुरुषं नारी न पश्येच्च रजस्वला ।
ईक्षेत भास्करं देवं ब्रह्मकूर्चं (पञ्चगव्यं) ततः पिबेत् ॥
उशनः । ज्वराभिभूता या नारी रजसा च परिप्लुता ।
कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा ॥
चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।
सा सचेलावगाह्यापः स्नात्वास्नात्वा पुनः स्पृशेत् ।
दशद्वादशकृत्वो वा आचमेच्च पुनःपुनः ॥
अन्ते च वाससां त्यागस्ततः शुद्धा भवेच्च सा ।
दद्याच्छक्त्या ततो दानं पुण्याहेन विशुद्ध्यति ॥
पराशरः । आतुरे स्नानउत्पन्ने दशकृत्वोह्यनातुरः ।
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत्स आतुरः ॥
कश्यपः । उदिते तु यदा सूर्ये नारीणां दृश्यते रजः ।
जननं वा विपत्तिर्वा यस्याह तस्य शर्वरी ॥
पूर्वमेवदिनं ग्राह्यं यावन्नोदयते रविः ।

पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् ।
वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम् ॥
सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः ।
कुम्भे सहुलमादाय पञ्चगव्यं तथैव श ॥
पुण्यर्ग्भिरत्रिमन्त्र्यापोवाचा शुद्धिं लभेत्ततः ।
तेनैवस्नापयित्वा तु दाहं कुर्याद्यथाविधि ॥

पैठीनसि । सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेत् । मासेन स्त्री जननीम् ॥

---

# विधवाधर्मप्रकरणम् ।

पाराशरः । मृते भर्त्तरि या नारी ब्रह्मचर्यव्रते स्थिता ।
सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः ॥

याज्ञवल्क्यः । मृते जीवति वा पत्यौ या नान्यमुपगच्छति ।
सेह कीर्तिमवाप्नोति मोदते चोमयासह ॥

मनुः। कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु॥
नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः।
अन्यस्मिन्हि नियुञ्जाना धर्मं हन्युः सनातनम्॥
नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित्।
न विवाहविधावुक्तं विधवावेदनं पुनः॥
अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः।

वृद्ध हारितः। केशरंजनताम्बूलगंधपुष्पादि सेवनम्।
भूषितं रंगवस्त्रं च कांस्यपात्रे च भोजनम्॥
द्विवारभोजनं चाक्ष्णो रंजनं वर्जयेत् सदा।
स्नात्वा शुक्लांबरधरा जितक्रोधा जितेन्द्रिया।
नकल्क कुहका साध्वी तन्द्रालस्यविवर्जिता।
सुनिर्मला शुभाचारा नित्यं संपूजयेद्धरिम्॥



# स्नातकधर्मप्रकरणम् ।

न स्वाध्याय विरोध्यर्थमीहेत न यतस्ततः ।
नविरुद्धप्रसंगे न संतोषी च भवेत्सदा ॥
राजान्ते वासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा
दम्भिहैतुकपाखण्डिवकवृत्तींश्च वर्जयेत् ॥
शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः ।
न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥
न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् ।
नाहितं नानृतं चैव न स्तेनः स्यान्नवार्धुषी ॥
दाक्षायणी ब्रह्मसूत्री वेणुमान्सकमण्डलुः ।
कुर्यात्प्रदक्षिणं देवमृद्गोविप्रवनस्पतीन् ॥
न तु मेहेन्नदीछायावर्त्म गोष्ठाम्बुभस्मसु ।
न प्रत्यग्न्यर्कगोसोमसंध्याम्बु स्त्री द्विजन्मनः ॥
नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्ट मैथुनाम् ।

न च मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥
अयं मे वज्र इत्येवं सर्वं मन्त्रमुदीरयेत् ।
वर्षत्यप्रावृतो गच्छेत्स्वपेत्प्रत्यक्शिरा न च ॥
ष्ठीवनासृक् शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत् ॥
पादौ प्रतापयेन्नाग्नौ न चैनमभिलंघयेत् ॥
जलं पिबेन्नाञ्जलिना न शयानं प्रबोधयेत् ।
नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संविशेत् ॥
विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् ।
केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥
नाचक्षीत धयन्तीं गां नाद्वारेण विशेत्कचित् ।
न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः ॥
प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ।
दुष्टादशगुणं पूर्वात्पूर्वादेते यथाक्रमम् ॥
अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।
उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥
देवर्त्विक्स्नातकाचार्य राज्ञां छायां परस्त्रीयाः ।
नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनादि च ॥
विप्रा हि क्षत्रियात्मानो नावज्ञेयाः कदाचन ।
आमृत्योः श्रियमाकाङ्क्षेन्नकंचिन्मर्मणि स्पृशेत् ॥
दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ।
श्रुतिस्मृत्युदितं सम्यङ्नित्यमाचारमाचरेत् ॥
गोब्राह्मणानलान्नानि नोच्छिष्टो न यदा स्पृशेत् ।
न निन्दा ताडने कुर्यात्पुत्रं शिष्यं च ताडयेत् ॥
कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्म्यं मप्याचरेन्न तु ॥
मातृपित्रतिथिभ्रातृजामिसंबन्धिमातुलैः ।
वृद्धबालातुराचार्यवैद्यसंश्रितबान्धवैः ॥
ऋत्विक्पुरोहितापत्यभार्यादाससनामिभिः ।

विवादं वर्जयित्वा तु सर्वाँल्लोकाञ्जयेद्गृही ॥
परशय्यासनोद्यानगृहयानानि वर्जयेत् ।
अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि ॥
कदर्यबद्ध चौराणां क्लीबरंगावतारिणाम् ।
चिकित्सकातुरक्रुद्धः पुंश्चलीमत्तविद्विषाम् ॥
क्रूरोग्रपतित व्रात्यदाम्भिकोच्छिष्टभोजिनाम् ।
अवीरा स्त्री स्वर्णकारस्त्री जितग्रामयाजिनाम् ॥
शस्त्रविक्रयि कर्मारतन्तुवायश्ववृत्तिनाम् ॥
नृशंसराजरजककृतघ्नवधजीविनाम् ।
चैलधावसुराजीव सहोपपतिवेश्मनाम् ॥
पिशुनानृतनोश्चैव तथा चाक्रिकवन्दिनाम् ।
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥
मनुः । नाश्नीयाद्भार्यया सार्धं नैनामीक्षेतचाश्नतीम् ।
क्षुवतीं जृम्भमाणां वा न चासीनां यथासुखम् ॥
नाञ्जयंतीं स्वके नेत्रे न चाभ्यक्तामनावृताम् ।

न पश्येत्प्रस्रवन्तीं च तेजस्कामो द्विजोत्तमः ॥
नान्नमद्यादेकवासा न नग्नः स्नानमाचरेत् ।
उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।
उपवीतमलंकारं स्रजं करकमेव च ॥
लोष्ठमर्दी तृणच्छेदी नखखादी च यो नरः ।
स विनाशं व्रजत्याशु सूचकोऽशुचिरेव च ॥
न विगर्ह्य कथां कुर्याद्बहिर्माल्यं न धारयेत् ।
गवां च यानं पृष्ठेन सर्वथैव विगर्हितम् ॥
अद्वारेण च नातीयाद्ग्रामं वा वेश्म वावृतम् ।
रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत् ।
नाक्षैः क्रीडेत्कदाचित्तु स्वयं नोपानहौ हरेत् ।
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने ॥
सर्वं च तिलसंबद्धं नाद्यादस्तमिते रवौ ।
न च नग्नःशयीतेह न चोच्छिष्टः क्वचिद्व्रजेत् ॥
वैरिणं नोपसेवेत सहायं चैववैरिणः ।

अधार्मिकं तस्करं च परस्यैव च योषितम् ॥
न हीदृशमनायुष्यं लोके किंचन विद्यते ।
यादृशं पुरुषस्येह परदारोपसेवनम् ॥
क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम् ।
नावमन्येत वै भूष्णुः कृशानपि कदाचन ॥
नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः ।
आमृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम् ।
शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥
अनातुरः स्वानि खानि नस्पृशेदनिमित्ततः ।
रोमाणि च रहस्यानि सर्वाण्येव विवर्जयेत् ॥
वेदमेवाभ्यसेन्नित्यं यथाकालमतन्द्रितः ।
तं ह्यस्याहुः परं धर्ममुपधर्मोऽन्य उच्यते ॥
वेदाभ्यासेन सततं शौचेन तपसैव च ॥
अद्रोहेण च भूतानां जातिं स्मरति पौर्विकम् ॥
नसीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् ।

अधार्मिकाणां पापानामाशु पश्यन्विपर्ययम् ॥
नाधर्मश्चरितो लोके सद्यः फलति गौरिव ।
शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ॥
यदि नात्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु ।
नत्वेवतु कृतोऽधर्मः कर्तुर्भवति निष्फलः ॥
अधर्मेणैधते तावत्ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति ॥
सत्यधर्मार्यवृत्तेषु शौचे चैवारमेत्सदा ।
शिष्यांश्च शिष्याद्धर्मेण वाग्बाहूदरसंयतः ।
न पाणिपादचपलो न नेत्रचपलोऽनृजुः ।
न स्याद्वाक्चपलश्चैव न परद्रोहकर्मधीः ॥
येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्नरिष्यते ॥
परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ।
धर्मं चाप्य सुखोदर्कं लोकविक्रुष्टमेव च ॥

धर्मध्वजी सदालुब्धश्छाद्मिको लोकदम्भकः ।
बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसंधकः ॥
अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ।
शठोमिथ्याविनीतश्च वकव्रतचरो द्विजः ॥
ये वकव्रतिनो विप्रा ये च मार्जारलिंगिनः ।
ते पतन्त्यन्धतामिस्रे तेन पापेन कर्मणा ॥
न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ।
व्रतेन पापं प्रच्छाद्य कुर्वन्स्त्रीशूद्रदम्भनम् ॥
प्रेत्येह चेदृशाविप्रागर्ह्यन्ते ब्रह्मवादिभिः ।
छद्मना चरितं यच्च व्रतं रक्षांसि गच्छति ॥
अलिंगी लिंगिवेषेण यो वृत्तिमुपजीवति ।
स लिंगिनां हरत्येनस्तिर्यग्योनौ च जायते ॥
यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रापवादेन दानं च परिकीर्तनात् ॥
धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः ।

परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥
नामुत्र हि सहायार्थं पितामाता च तिष्ठतः ।
न पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥
एकः प्रजायते जन्तुरेक एव प्रलीयते ।
एकोऽनुभुंक्ते सुकृतमेक एव च दुष्कृतम् ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ ।
विमुखा बान्धवा यांति धर्मस्तमनुगच्छति ॥
तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥
धर्मप्रधानं पुरुषं तपसा हतकिल्बिषम् ।
परलोकं नयत्याशु भास्वन्तं स्वशरीरिणम् ॥
पाराशरः। षट्कर्माभिरतो नित्यं देवतातिथिपूजकः
हुतशेषन्तु भुञ्जानो ब्राह्मणो नावसीदति ॥
संध्यास्नानं जपो होमो देवतातिथिपूजनम् ।
आतिथ्यं वैश्वदेवं च षट्कर्माणि दिने दिने ॥

नारद उवाच। गृहेष्ववस्थितो राजन्क्रियाः कुर्वन्गृहोचिताः।
वासुदेवार्पणं साक्षादुपासीत महामुनीन् ॥ १ ॥
शृण्वन्भगवतोऽभीक्ष्णमवतारकथामृतम्।
श्रद्दधानो यथाकालमुपशान्तजनावृतः ॥ २ ॥
सत्संगाच्छनकैः संगमात्मजायात्मजादिषु।
विमुच्यन्मुच्यमानेषु स्वयं स्वप्नवदुत्थितः ॥ ३ ॥
यावदर्थमुपासीनो देहे गेहे च पण्डितः।
विरक्तोरक्तवत्तत्र नृलोके नरतां न्यसेत् ॥ ४ ॥
ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे।
यद्वदन्ति यदिच्छन्ति चानुमोदेत निर्ममः ॥ ५ ॥
दिव्यं भौमं चान्तरिक्षं वित्तमच्युतनिर्मितम्।
तत्सर्वमुपभुञ्जान एतत्कुर्यात्स्वतो बुधः ॥ ६ ॥
यावद्भ्रियेत जठरं तावत्सत्वं हि देहिनाम्।
अधिकं योभिमन्येत स स्तेनो दण्डमर्हति ॥ ७ ॥
मृगोष्ट्रखरमर्कीखुसरीसृप्खगमक्षिकाः।

आत्मनः पुत्रवत्पश्येत्तैरेषामन्तरं कियत् ॥ ८ ॥
त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि ।
यथादेशं यथाकालं यावद्दैवोपपादितम् ॥ ९ ॥
आश्वाधान्तेवसायिभ्यः कामान्संविभजेत्तथा ।
अप्येकात्मनो दारां नृणां स्वत्वग्रहो यतः ॥ १० ॥
जह्यादर्थे स्वप्राणान्हन्याद्वा पितरं गुरुम् ।
तस्यां स्वत्वं स्त्रियां जह्याद्यस्तेन ह्यजितोजितः ॥ ११ ॥
कृमिविड् भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम् ।
क्व तदीय रतिर्भार्या क्वायमात्मा नभश्छदिः ॥ १२ ॥
सिद्धैर्यज्ञावशिष्टार्थैः कल्पयेद्वृत्तिमात्मनः ।
शेषेस्वत्वं त्यजन्प्राज्ञः पदवीं महतामियात् ॥ १३ ॥
देवानृषीन्नृभूतानि पितॄनात्मानमन्वहम् ।
स्ववृत्त्या गतवित्तेन यजेत पुरुषं पृथक् ॥ १४ ॥
यर्ह्यात्मनोऽधिकाराद्याः सर्वाः स्युर्यज्ञसंपदः ।
वैतानिके न विधिना अग्निहोत्रादिना यजेत् ॥ १५ ॥

न ह्यग्निमुखतोऽयं वै भगवान्सर्वयज्ञभुक्।
इज्येत हविषा राजन्यथा विप्रमुखे हुतैः ॥ १६ ॥
तस्माद्ब्राह्मणदेवेषु मर्त्यादिषु यथार्हतः।
तैस्तैः कामैर्यजस्वैनं क्षेत्रज्ञं ब्राह्मणा ननु ॥ १७ ॥
स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते।
यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम् ॥ १८ ॥
पात्रं त्वत्रनिरुक्तं वै कविभिः पात्रवित्तमैः।
हरिरेवैक उर्वीशयन्मयं वै चराचरं ॥ १९ ॥
पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः।
तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनुम् ॥ २० ॥
नन्वस्य ब्राह्मणा राजन्कृष्णस्य जगदात्मनः।
पुनन्तः पादरजसा त्रिलोकीं दैवतं महत् ॥ २१ ॥
देशे काले च संप्राप्ते मुन्यन्नं हरिदैवतम्।
श्रद्धया विधिवत्पात्रे न्यस्तं कामधुगक्षयम् ॥ २२ ॥
देवर्षिपितृभूतेभ्य आत्मने स्वजनाय च ॥

अन्नं संविभजन्पश्येत्सर्वं तत्पुरुषात्मकम् ॥ २३ ॥

न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित् ।

मुन्यन्नैः स्यात्परा प्रीतिर्यथा न पशुहिंसया ॥ २४ ॥

नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम् ।

न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य यः ॥ २५ ॥

धर्मार्थमपि नेहेत यात्रार्थं वाऽधनो धनम् ।

अनीहानीह मानस्य महाहेरिव वृत्तिदा ॥ २६ ॥

संतुष्टस्य निरीहस्य स्वात्मारामस्य यत्सुखम् ।

कुतस्तत्कामलोभेन धावतोऽर्थे हयादिशः ॥ २७ ॥

सदासंतुष्टमनसः सर्वाः सुखमया दिशः ।

शर्कराकण्टकादिभ्यो यथोपानत्पदः शिवम् ॥ २८ ॥

संतुष्टः केन वा राजन्नवर्तेतापि वारिणा ।

औपस्थ्यजैह्व्यकार्पण्याद्गृहपालायते जनः ॥ २९ ॥

असंतुष्टस्य विप्रस्य तेजो विद्या तपो यशः ।

स्रवन्तीन्द्रियलौल्येन ज्ञानं चैवावकीर्यते ॥

कामस्यान्तं चक्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात् ।
जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः ॥
पण्डिता बहवो राजन्बहुज्ञाः संशयच्छिदः ।
सदस्यतयोऽप्येके असंतोषात्पतन्त्यधः ॥
असंकल्पाज्जयेत्कामं क्रोधं कामविवर्जनात् ।
अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् ॥
आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया ।
योगान्तरायान्मौनेनाहिंसां कायाद्यनीहया ।
कृपया भूतजं दुःखं दैवं जह्यात्समाधिना ॥
आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया ।
रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च ॥
एतत्सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत् ।
षड्वर्गसंयमैकान्ताः सर्वा नियमचोदनाः ।
तदन्ता यदि नो योगानावहेयुः श्रमावहाः ॥
यश्चित्तविजये यत्तः स्यान्निःसंगोऽपरिग्रहः ।

एको विविक्तशरणो भिक्षुर्भिक्षा मिताशनः ॥
यतो यतो निःसरति मनः कामहतं भ्रमत् ।
ततस्तत उपाहृत्य हृदि रुन्ध्याच्छनैर्बुधः ॥
यः प्रव्रज्य गृहात्पूर्वं त्रिवर्गावपनात्पुनः ।
यदि सेवेत तान्भिक्षुः स वै वान्ताश्यपत्रपः ॥
यैः स्वदेहः स्मृतो नात्मामृत्योर्विट्क्रिमिभस्मसात् ।
त एनमात्मसात्कृत्वा श्लाघयन्ति ह्यसत्तमाः ॥
गृहस्थस्य क्रिया त्यागो व्रतत्यागो वटोरपि ।
तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलौल्यता ॥
आश्रमापसदा ह्येते खल्वाश्रमविडंबकाः ।
देवमाया विमूढांस्तानुपेक्षेतानुकंपया ॥
आत्मानं चेद्विजानीयात्परं ज्ञानधुताशयः ।
किमिच्छन्कस्य वा हेतोर्देहं पुष्णाति लंपटः ॥
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।
आवर्तेन प्रवृत्तेन निवृत्तेनाश्नुतेऽमृतम् ॥

गौतमः । 'दया सर्वेषु भूतेषु क्षान्तिरनसूयाशुचिरनायासो-
मांगल्यमकार्पण्यमस्पृहाचेत्यष्टावात्मगुणाः ।

याज्ञवल्क्यः । यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥

योगियाज्ञवल्क्यः । ऋषिभ्यो ब्रह्मचर्य्येण पितृभ्यश्च सुतैस्तथा ।
कुर्याद्यज्ञेन देवेभ्यः स्वाश्रमं धर्ममाचरेत् ॥
चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः ।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः ॥
तपः सन्तोषमास्तिक्यं दानमीश्वरपूजनम् ।
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपोव्रतम् ॥
एते च नियमाः प्रोक्ता स्तांश्च सर्वान् पृथक् शृणु ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽर्जवम् ।
क्षमा धृतिर्मिताहारः शौचं त्वेते यमादश ॥
सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ।
शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥

यस्य यस्य यदा दुःस्थः स तं यत्नेन पूजयेत् ।
ब्रह्मणैषां वरोदत्तः पूजिताः पूजयिष्यथ ॥
अर्कः पलाशः खदिर अपामार्गोऽथपिप्पलः ।
उदम्बरः शमीदूर्वाकुशाश्च समिधः क्रमात् ॥
एकैकस्यात्राष्टशतमष्टाविंशतिरेव वा ।
होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वायुताः ॥

दक्षः । अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ।
आश्रमेण विना तिष्ठन्प्रायश्चित्ती भवेद्द्विजः ॥

पाराशरः । ब्राह्मणा जंगमंतिर्थं तपोविद्यासमन्विताः
येषां वाक्योदकेनैव शुद्ध्यन्ति मलिनो जनाः ॥

छन्दोगपरिशिष्टे । ॐकारपूर्वं हि योगोपासनं यानि नित्यानि पुण्यतमानि कर्माणि दानयज्ञतपःस्वाध्यायजपध्यानसन्ध्योपासनप्राणायामहोमदैवपैत्र्यमन्त्रोच्चारब्रह्मारम्भादीनि यच्चान्यत्किञ्चिच्छ्रेयस्तत्सर्वं प्रणवमुच्चार्य प्रवर्तयेत्समापयेच्च ॥ स्वरितोदात्त एकाक्षर ॐकारो ऋग्वेदे । सर्वोदात्त-

एकाक्षर ॐकारो यजुर्वेदे । दीर्घोदात्तएकाक्षर ॐकारः साम्नी । संक्षिप्तोदात्त एकाक्षर ॐकारोऽथर्वणवेदे ॥ 'ॐ-कारस्य ब्रह्मविष्णुरुद्ररूपत्वमुक्तम् ॥

पारस्करगृह्यसूत्रे । ग्रामवचनं च कुर्युः ॥

विवाहश्मशानयोर्ग्रामं प्राविशतादितिवचनात् ॥

तस्मात्तयोर्ग्रामप्रमाणमितिश्रुतेः ॥

त्रिकृतं वासोनाच्छादयीत ॥

श्रुतिः । सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रायनेच्छन्ति यदि जानीयात् स्त्रीशूद्रः समृतोऽधो गच्छति तस्मात्सर्वदानाचष्टे यद्याचष्टे स आचार्यस्तेनैव स मृतोऽधो गच्छति ॥

---

# वानप्रस्थधर्मप्रकरणम् ।

श्रीमद्भागवते । वानप्रस्थस्य वक्ष्यामि नियमान्मुनिसंमताल् ।
यानातिष्ठन्मुनिर्गच्छेदृषिलोकमिहाञ्जसा ॥ १ ॥
नकृष्टपच्यमश्नीयादकृष्टं चाप्यकालतः ।

अग्निपक्वमथामं वा अर्कपक्वमुताहरेत् ॥ २ ॥
वन्यैश्चरुपुरोडाशान्निर्वपेत्कालचोदितान् ।
लब्धे नवे नवेऽन्नाद्ये पुराणं तु परित्यजेत् ॥ ३ ॥
अग्न्यर्थमेवशरणमुटजं वाद्रिकन्दराम् ।
श्रयेत हिमवाय्वग्निवर्षार्कातपषाट्स्वयम् ॥ ४ ॥
केशरोमनखश्मश्रुमलानि जटिलोदधत् ॥
कमण्डल्वजिने दण्डवल्कलाग्निपरिच्छदान् ॥ ५ ॥
चरेद्वने द्वादशाब्दानष्टौ वा चतुरो मुनिः ।
द्वावेकं वा यथाबुद्धिर्न विपद्येत कृच्छ्रतः ॥ ६ ॥
यदाऽकल्पः स्वक्रियायां व्याधिभिर्जरयाऽथवा ।
आन्वीक्षिक्यां वा विद्यायां कुर्यादनशनादिकम् ॥ ७ ॥
आत्मन्यग्नीन्समारोप्य संन्यस्याहं ममात्मताम् ।
कारणेषु न्यसेत्सम्यक् संघातं तु यथार्हतः ॥ ८ ॥
इत्यक्षरतयात्मानं चिन्मात्रमवशेषितम् ।
ज्ञात्वाद्वयोऽथविरमेद्दग्धयोनिरिवानलः ॥ ९ ॥

# सन्यासाश्रमधर्मप्रकरणम् ।

पाराशरः । सन्यस्तं ब्राह्मणं दृष्ट्वा स्थानाच्चलति भास्करः ।
एषमे मंडलं भित्वा परं स्थानं प्रयास्यति ॥
द्वाविमौ पुरुषौ लोके सूर्यमंडलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥

श्रीमद्भागवते । कल्पस्त्वेवं परिव्रज्य देहमात्रावशेषितः ।
ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम् ॥ १ ॥
विभृयाद्यद्यसौवासः कौपीनाच्छादनं परम् ।
त्यक्तं न दण्डलिंगादेरन्यात्किंचिदनापदि ॥ २ ॥
एक एव चरेद्भिक्षुरात्मारामोऽनपाश्रयः ।
सर्वभूतसुहृच्छान्तो नारायणपरायणः ॥ ३ ॥
पश्येदात्मन्यदोविश्वं परे सदसतोऽव्यये ।
आत्मनं च परंब्रह्म सर्वत्रसदसन्णये ॥ ४ ॥
सुप्तप्रबोधयोः संधावात्मनोगतिमात्मदृक् ।
पश्यन्बंधं च मोक्षं च मायामात्रं न वस्तुतः ॥ ५ ॥

मञ्चकं शुक्लवस्त्रं चं स्त्री कथा लौल्यमेव च।
दिवास्वापंच यानं च यतीनां पातकानि षट् ॥
दूरयात्रां प्रयत्नेन वर्जयेदात्मचिन्तक ः।
सदोपनिषदं विद्यामभ्यसेन्मुक्ति हेतुकीम् ॥
न तीर्थसेवी नित्यं स्यान्नोपवासपरो यतिः।
न चाध्ययनशीलः स्यान्नव्याख्यानपरो भवेत् ॥
अपापमशठं वृत्तमजिह्मं नित्यमाचरेत्।
इन्द्रियाणि समाहृत्य कूर्मोऽङ्गानीव सर्वशः॥
क्षीणेन्द्रियमनोवृत्तिर्निराशीर्निष्परिग्रहः।
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च ॥
निर्ममा निरहंकारो निरपेक्षो निराशिषः।
विविक्तदेशसंसक्तो मुच्यते नात्रसंशयः ॥
'यदहरेव विरजेत्तदहरेव प्रव्रजेत्'।
यदामनसि संजातं वैतृष्ण्यं सर्ववस्तुषु ॥
तदा सन्यासमिच्छन्ति पतितः स्याद्विपर्यये।

विरक्तः प्रव्रजेद्धीमान्स रक्तस्तु गृहे वसेत् ॥
सरागो नरकं याति प्रव्रजन्हि द्विजाधमः ।
यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं करः ॥
सन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्यवान् ।
संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ॥
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ।
प्रवृत्तिलक्षणं कर्म ज्ञानं सन्यासलक्षणम् ॥
तस्माज्ज्ञानं पुरस्कृत्य सन्यसेदिह बुद्धिमान् ।
यदा तु विदितं तत्त्वं परं ब्रह्मसनातनम् ॥
तदेकदण्डं संगृह्य सोपवीतं शिखां त्यजेत् ॥
परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि ।
सर्वैषणाविनिर्मुक्तः सभैक्षं भोक्तुमर्हति ॥
पूजितो वन्दितश्चैव सुप्रसन्नो यथा भवेत् ।
तथाचेत्ताड्यमानस्तु तदा भवति भैक्षभुक् ॥
यस्मिन्शान्तिः शमः शौचं सत्यं संतोष आर्जवम् ।

अकिंचनमदम्भश्च स कैवल्याश्रमे वसेत् ॥
यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा तदा भवति भैक्षभुक् ॥
अतीतान्नस्मरेद्भोगान्नतथानागतानपि ।
प्राप्तांश्च नाभिनन्देद्यः स कैवल्याश्रमे वसेत् ॥
कौपीनयुगलंकन्थादण्डएकःपरिग्रहः ।
यतेः परमहंसस्य नाधिकं तु विधीयते ॥
यदि वा कुरुते रागादधिकस्य परिग्रहम् ।
रौरवं नरकं गत्वा तिर्यग्योनिषु जायते ॥
नामगोत्रादिवरणं देशं कालं श्रुतं कुलम् ।
वयो वृत्तं व्रतं शीलं ख्यापयेन्नैव सद्यतिः ॥
न संभाषेत्स्त्रियं कांचित्पूर्वदृष्टां च न स्मरेत् ।
कथां च वर्जयेत्तासां न पश्येल्लिखितामपि ॥
यतिपात्राणि मृद्वेणुदार्वलांबुमयानि च ।
सलिलं शुद्धिरेतेषां गोवालेश्चावघर्षणम् ॥

# वैश्यक्षत्रियशूद्राणांश्च धर्मप्रकरणम्।

याज्ञवल्क्यः इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च।
प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा॥
प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्।
कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम्॥
शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत्।
शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्॥
भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियारतः।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्नहापयेत्॥
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम्॥
पाराशरः। शूद्रस्य द्विजशुश्रूषा परमो धर्म उच्यते।
अन्यथा कुरुते किंचित्तद्भवेत्तस्य निष्फलम्॥
लवणं मधु तैलं च दधि तक्रंघृतंपयः।

नदुष्येच्छूद्रजातीनां कुर्यात्सर्वेषु विक्रयम् ॥
विक्रिणन्मद्यमांसानि ह्यभक्ष्यस्य च भक्षणम् ।
कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् ॥
कपिलाक्षीरपानेन ब्राह्मणीगमने न च ।
वेदाक्षर विचारेण शूद्रस्य नरकं ध्रुवम् ।

---

# ॥ मंत्रशास्त्ररहस्यम् ॥

मंत्रमहोदधौ ॥ शुभं वाप्यशुभं वापि काम्यं कर्म करोति यः ।
तस्यारित्वं व्रजेन्मन्त्रो न तस्मात्तत्परो भवेत् ॥
विषयासक्तचित्तानां संतोषाय प्रकाशितम् ॥
पूर्वाचार्य्योदितं काम्यं कर्मनैतद्धितावहम् ॥
काम्यकर्मप्रसक्तानां तावन्मात्रं भवेत्फलम् ।
निष्कामं भजतां देवमखिलाभीष्टसिद्धयः ॥
प्रतिमन्त्रं समुदिताये प्रयोगाः सुखाप्तये ।

तदासक्तिं विहायैव निष्कामो देवतां भजेत् ॥
वेदे काण्डत्रयं प्रोक्तं कर्मोपासनबोधनम् ।
साधनं कांडयुग्मोक्तं तृतीये साध्यमीरितम् ॥
तस्माद्वेदोदितं कुर्य्यादुपासीत च देवताः ।
शुद्धांतःकरणस्तेन लभते ज्ञानमुत्तमम् ॥
कार्य्यकारणसंघातं प्रविष्टश्चेतनात्मकः ।
जीवो ब्रह्मैव संपूर्णमितिज्ञात्वा विमुच्यते ॥
मनुष्यदेहं संप्राप्य उपासीत च देवताः ।
यो न मुच्येत संसारान्महापापयुतो हि सः ।
आत्मज्ञानाप्तये तस्माद्यतितव्यं नरोत्तमैः ॥
कर्मभिर्देवसेवाभिः कामाद्यरिगणक्षयात् ।
चिकीर्षुर्देवतोपास्तिमादौ भावि विचारयेत् ॥
सिद्धिं मन्त्रस्य जानीयाद्देवतायाः प्रसन्नताम्
ततोजपेऽधिकं यत्नं प्रकुर्य्याज्ज्ञानलब्धये ॥
लब्धज्ञानः कृतार्थः स्यात्संसारात्प्रतिमुच्यते ।

ज्ञात्वात्मानं परंब्रह्म वेदान्तैः प्रतिपादितम् ॥
तं वंदे परमात्मानं सर्वव्यापिनमीश्वरम् ॥
यो नाना देवतारूपो नृणामिष्टं प्रयच्छति ॥

स्पष्टम् गृह्यपरिशिष्टे । न्यासविधेरवैदिकत्वादिति
एतेनाक्षरन्यासपादन्यासांतर्मातृकाबहिर्मातृका
दिनांमुद्रादिविधेः शापमोचनादिविधेश्च
तान्त्रीकत्वेनावैदिकत्वादनावश्यकत्वं वेदितव्यम् ॥

# ॥ आयुर्वेदोपदेशप्रकरणम् ॥

आयुः कामायमानेन धर्मार्थसुखसाधनम् ।
आयुर्वेदोपदेशेषु विधेयः परमादरः ॥
व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्चनिग्रहः ।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥
सर्वेषामेवरोगानां मूलं तु कुपिता मलाः ।

पथ्ये सतिगदार्तस्य किमौषधिनिषेवणम्।
विनापि भेषजैर्व्याधिः पथ्यादेव निवर्तते।
न तु पथ्यविहीनस्य भेषजानां शतैरपि॥
पथ्याशिनां शीलवतां नराणां, सद्वृत्तिभाजां विजितेन्द्रियाणां।
एवं विधानामिदमायुरत्र, चिन्त्यं सदावृद्धमुनीप्रवाहः॥
अत्यम्बुपानान्न विपच्यतेऽन्नमनम्बुपानाच्च स एव दोषः।
तस्मान्नरो वन्हि विवर्धनार्थं मुहुर्मुहुर्वारि पिबेदभूरि॥
अजीर्णे भेषजं वारि जीर्णे वारि बलप्रदम्।
अमृतं भोजनार्धे तु भुक्तस्योपरि तद्विषम्॥
वृद्धार्कः प्रेतधूमश्च वृद्धस्त्रीथिल्लरोदकम्।
आयुष्यनाशकं नित्यं रात्रौक्षीरान्नभोजनम्॥
ज्वरादौ लंघनं प्रोक्तं ज्वरमध्ये तु पाचनम्।
ज्वरान्ते भेषजं दद्याज्ज्वरमोक्षे विरेचनम्॥
जिह्वप्रमाणं जानीहि भोजने भाषणेऽपिच।

अतिभुक्तिरतीवोक्तिः सद्यः प्राणापहारिणी ॥
न संपत्तिक्रियासक्ति भेषजं च न विद्यते ।
सर्वरोगविनाशाय निशान्ते च पयः पिबेत् ॥
दिनान्ते च पिबेदुग्धं निशान्ते च पिबेत्पयः ।
भोजनान्ते पिबेत्तक्रं किं वैद्यस्य प्रयोजनम् ॥
पूर्वजन्मकृतं कर्म व्याधिरूपेण बाधते ।
तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः ॥
धर्मेण हन्यते व्याधिर्ग्रहो धर्मेणहन्यते ।
धर्मेण हन्यते शत्रुर्यतो धर्मस्ततो जयः ॥
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ॥
चक्षुरोगी कर्णरोगी रोगी चैव कफादिषु ।
कण्ठस्नानं प्रकुर्वीत शिरस्नानसमं हि यत् ॥
अवश्यमेवभोक्तव्यं कृतं कर्म शुभाशुभम् ।
कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि ॥
अनित्यानि शरीराणि विभवो नैवशाश्वतः ।

नित्यं सन्निहितो मृत्युः कर्तव्यो धर्मसंग्रहः ॥

घृतेन वर्धते बुद्धिः क्षीरेणायुः प्रवर्धते ।
शाकेन वर्धते व्याधिर्मांसं मांसेन वर्धते ॥

त्यज दुर्जनसंसर्गं भज साधुसमागमम् ।
कुरु पुण्यमहोरात्रं स्मर सर्वेश्वरं सदा ॥

## मृत्युशोके ज्ञानोपदेशः ।

कृतोदकान्समुत्तीर्णान्मृदुशाड्वलसंस्थितान् ।
स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥

मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् ।
करोति यः स सम्मूढो जलबुद्बुदसन्निभे ॥

पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः ।
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥

गन्त्री वसुमतीनाशमुदधिर्दैवतानि च ।

फेनप्रख्यः कथन्नाशं मर्त्यलोको न यास्यति ।
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुंक्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥

इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः ।
विदश्य निम्बपत्राणि नियता द्वारिवे मनः ॥

मा शोकं कुरुतानित्ये सर्वस्मिन्प्राणधारिणि ।
धर्मं कुरुत यत्नेन यो वः संगतिमेष्यति ॥

तथा च विष्णुः ॥

यदुदगयनन्तदहर्देवानान्दक्षिणायनं रात्रिः संवत्सरो ह्यहोरात्रं तत्तीं शतामासोद्वादशवर्षं शतानि कलियुगम्, द्विगुणानि द्वापरम्, त्रिगुणानि त्रेतायुगम्, चतुर्गुणानि कृतयुगम्, तत्सहस्रं तु कल्पः, स च पितामहस्याहस्तावती चास्य रात्रिः ।

एवंविधेनाहोरात्रेण मासवर्षगणनयासर्वश्रेष्ठस्यैव ब्रह्मणो वर्षशतमायुः, एवं ब्रह्मायुषा च परिच्छिन्नः पौरुषो दिवसस्तस्यान्ते महाकल्पः तावत्येवचास्य निशा, पौरुषाणां महोरा-

त्राणामतीतानां संख्यैव नास्ति न च भविष्याणाम् अनाद्य-
न्तत्वात्कालस्य ।

एवमस्मिन्निरालम्बे काले सन्ततयायिनि ।
न तद्रूपं पश्यामि स्थितिर्यस्य भवेद् ध्रुवा ॥
गंगायाः सिकता धारास्तथा वर्षति वासवे ।
शक्यागणयितुं लोके न व्यतीताः पितामहाः ॥
चतुर्दश विनश्यन्ति कल्पे कल्पे सुरेश्वराः ।
सर्वलोकप्रधानाश्च मनवश्च चतुर्दश ॥
बहूनीन्द्र सहस्राणि दैत्येन्द्रनियुतानि च ।
विनष्टानीह कालेन मनुष्याणान्तु का कथा ॥
राजर्षयश्च बहवः सर्वे समुदिता गुणैः ।
देवर्षयश्च कालेन सर्वे ते निधनं गताः ॥
ये समर्था जगत्त्राणे सृष्टिसंहारकारिणः ।
तेऽपि कालेन नीयन्ते कालो हि बलवत्तरः ॥
आक्रम्य सर्वः कालेन परलोकाय नीयते ।
कर्मपथ्योदनो जन्तुस्तत्र का परिदेवना ॥

जातस्य हि ध्रुवो मृत्यु ध्रुवं जन्म मृतस्य च।
अर्थे दुःपरिहार्येऽस्मिन् नास्ति शोकसहायता॥
शोचन्तो नोपकुर्वन्ति मृतस्येह जना यतः।
अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः॥
सुकृतं दुष्कृतं चोभे सहायौ यस्य गच्छतः।
बान्धवैस्तस्य किङ्कार्यं शोचद्भिरथवा तथा॥
बान्धवैर्नाम शोचद्भिः स्थितिं प्रेतो न विन्दति।
अस्वस्थपतितानेष पिण्डतोयप्रदानतः॥
अर्वाक् सपिण्डीकरणात् प्रेतस्य श्राद्धकर्त्तुश्च प्रथक्
श्राद्धे कृते शुभम्।
तस्माच्छ्राद्धं सदा कार्यं शोकन्त्यक्त्वा निरर्थकम्॥
एतावदेव कर्तव्यं सदा प्रेतस्य बन्धुभिः।
नोपकुर्यान्नरः शोचन् प्रेतस्यात्मन एव च॥
दृष्ट्वालोकमनानन्दं म्रियमाणाँश्च बान्धवान्।
धर्ममेकं सहायार्थे चरयध्वं सदा नराः॥
मृतोऽपि बान्धवः शक्तो नानुगन्तुं मृतं नरम्॥

जायावर्जं हि सर्वस्य याम्यः पन्था विभिद्यते ॥
धर्म एकोऽनुयात्येनं यत्रक्वचनगामिनम् ।
ततोऽसारे त्रिलोक्येऽस्मिन्धर्मङ्कुरुतमाचिरम् ॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्ने वापराह्णिकम् ।
नहि प्रतीक्षते मृत्युः कृतं वास्य न वाऽकृतम् ॥
क्षेत्रापणगृहासक्तमन्यत्रगतमानसम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥
न कालस्य प्रियः कश्चिदप्रियो वाऽपि विद्यते ।
आयुष्ये कर्मणि क्षिणे प्रसह्य हरते जनम् ॥
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥
नौषधानि न मन्त्राश्च न होमा न पुनर्जपाः ।
त्रायन्ते मृत्युनोपेतं जरया वाऽपि मानवम् ॥
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुविन्दति ॥
आगामिनमनर्थं हि प्रतिष्ठानशतैरपि ।

आपद्यपि हि कष्टायां सद्यशौचं विधीयते ॥

पाराशरः । भृग्वग्निमरणे चैव देशान्तरमृते तथा ।

बाले प्रेते च सन्यस्ते सद्यः शौचं विधीयते ॥

शिल्पिनः कारुका वैद्या दासी दासाश्च नापिताः ।

राजानः श्रोत्रियाश्चैव सद्यः शौचाः प्रकीर्तिताः ॥

संपर्काद्दुष्यते विप्रो जनने मरणे तथा ।

संपर्काच्च निवृत्तस्य न प्रेतं न च सूतकं ॥

तस्मात्सर्वप्रयत्नेन संपर्कं वर्जयेद्बुधः ॥

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।

पदेपदे यज्ञफलमानुपूर्व्या लभन्ति ते ॥

न तेषामशुभं किंचित्पापं वाशुभकर्मणाम् ।

जलावगाहनात्तेषां सद्यः शौचं विधीयते ॥

# यमयातना नर्कवर्णनम् ।

राजोवाच ॥ नरका नाम भगवन्किं देशविशेषा अथवा बहिस्त्रिलोक्या अहोस्विदन्तराल इति ॥

ऋषिरुवाच ॥ अन्तराल एव त्रिजगत्यास्तु दिशि दक्षिणस्यामधस्ताद्भूमेरुपरिष्टाच्च जलाद्यस्यामग्निष्वात्तादयः पितृगणा दिशिस्वानां गोत्राणां परमेण समाधिना सत्या एवाशिष आशासाना निवसन्ति ॥ १ ॥ यत्र ह वाव भगवान्पितृराजो वैवस्वतः स्वविषयं प्रापितेषु स्वपुरुषैर्जन्तुषु संपरेतेषु यथा कर्मावद्यं दोषमेवानुल्लङ्घितभगवच्छासनः सगणो दमं धारयति ॥ २ ॥ तत्र हैके नरकानेकविंशतिं गणयन्ति अथ तांस्ते राजन्नामरूपलक्षणतोऽनुक्रमिष्यामस्तामिस्रोऽन्धतामिस्रो रौरवो महारौरवः कुम्भीपाकः कालसूत्रमसिपत्रवनं सूकरमुखमन्धकूपः कृमिभोजनः संदंशस्तप्तभूमिर्वज्रकण्टकशाल्मली वैतरणी पूयोदःप्राणरोधो विशसनं लालाभक्षः सारमेयादनमवीचिरयः पानमिति ॥ किं च क्षारकर्दमो रक्षोगणभोजनः शूलप्रोतो दन्दशूको वटनिरोधनः पर्यावर्तनः सूचीमुखमित्यष्टाविंशतिनरका विविधयातनाभूमयः ॥ ३ ॥

तत्र यस्तु परवित्तापत्यकलत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरतिभयानकैस्तामिस्रे नरके बलान्निपात्यते अनशनानुदपानदण्डताडनसंतर्जनादिभिर्यातनाभिर्यात्यमानो जन्तुर्यत्र कश्मलमासादित एकदैव मूर्च्छामुपयाति तामिस्रप्राये ॥ ४ ॥ एवमेवान्धतामिस्रे यस्तु वञ्चयित्वा पुरुषं दारादीनुपयुङ्क्ते यत्र शरीरी निपात्यमानो यातनास्थो वेदनया नष्टमतिर्नष्टदृष्टिश्च भवति यथा वनस्पतिर्वृश्च्यमानमूलस्तस्मादन्धतामिस्रं तमुपदिशन्ति ॥ ॥ ५ यस्त्विह वा एतदहमिति ममेदमिति भूतद्रोहेण केवलं स्वकुटुम्बमेवानुदिनं प्रपुष्णाति स तदिह विहाय स्वयमेव तदशुभेन रौरवे निपतति ॥ ६ ॥ ये त्विह यथैवामुना विहिंसिता जन्तवः परत्र यमयातनामुपगतं त एव रुरवो भूत्वा तथा तमेव विहिंसन्ति तस्माद्रौरवमित्याहू रुरुरिति सर्पादतिक्रूरसत्त्वस्यापदेशः ॥ ७ ॥ एवमेव महारौरवो यत्र निपतितं पुरुषं क्रव्यादा नाम रुरवस्तं क्रव्येण घातयन्ति यः केवलं देहंभरः ॥ ८ ॥ यस्त्विह वा उग्रपशून्पक्षिणो वा प्राणत उपरन्धयति तमपकरुणं पुरुषादैरपि विगर्हितममुत्र यमानुचराः कुम्भीपाके तप्ततैले उपरन्धयन्ति ॥ ९ ॥ यस्त्वित्वह पितृविप्रब्रह्मध्रुक्स कालसूत्रसंज्ञके नरके

अयुतयोजनपरिमण्डले ताम्रमये तप्तखले उपर्यधस्तादग्न्यर्काभ्या मतितप्यमानेऽभिनिवेशितः क्षुत्पिपासाभ्यां च दह्यमानान्त-र्बहिः शरीर आस्ते शेते चेष्टतेऽवतिष्ठति परिधावति च यावन्ति पशुरोमाणि तावद्वर्षसहस्राणि ॥ १० ॥ यस्त्विह वै निजवेदपथादनापद्यपगतः पाखण्डं चोपगतस्तमसिपत्रवनं प्रवेश्य कशया प्रहरन्ति तत्र हासावितस्ततो धावमान उभ-यतोधारैस्तालवनासिपत्रैश्छिद्यमानसर्वाङ्गो हा हतोऽस्मीति परमया वेदनया मूर्च्छितः पदेपदे निपतति स्वधर्महा पाखं-ण्डानुगतं फलं भुङ्क्ते ॥ ११ ॥ यस्त्विह वै राजा राजपुरुषो वा अदण्ड्ये दण्डं प्रणयति ब्राह्मणे वा शरीरदण्डं स पापीयान्नरकेऽमुत्र सूकरमुखे निपतति तत्रातिबलैर्विनिष्पिष्य-माणावयवो यथैवेहेक्षुखण्ड आर्तस्वरेण स्वनयन्क्वचिन्मूर्च्छितः कश्मलमुपगतो यथैवेहादृष्टदोषा उपरुद्धाः ॥ १२ ॥ य-स्त्विह वै भूतानामीश्वरोपकल्पितवृत्तीनामविविक्तपरव्यथानां स्वयं पुरुषोपकल्पितवृत्तिर्विविक्तपरव्यथो व्यथामाचरति स परत्रान्धकूपे तदभिद्रोहेण निपतति तत्र हासौ तैर्जन्तुभिः प-शुमृगपक्षिसरीसृपैर्मशकयूकामत्कुणमक्षिकादिभिर्ये केचाभिद्रु-ग्धास्तैः सर्वतोऽभिद्रुह्यमाणस्तमसि विहतनिद्रानिर्वृतिरलब्धाव-

स्थानः परिक्रामति यथा कुशरीरे जीवः ॥ १३ ॥ यस्त्विह वा असंविभज्याश्नाति यत्किंचनोपनतमनिर्मितपञ्चयज्ञो वायससंस्तुतः स परत्र कृमिभोजने नरकाधमे निपतति तत्र शतसहस्रयोजने कृमिकुण्डे कृमिभूतः स्वयं कृमिभिरेव भक्ष्यमाणः कृमिभोजनो यावत्तदप्रत्ताप्रहुतादोऽनिर्वेशमात्मानं यातयते ॥ १४ ॥ यस्त्विह वै स्तेयेन बलाद्वा हिरण्यरत्नादीनि ब्राह्मणस्य वापहरत्यन्यस्य वानापदि पुरुषस्तममुत्र राजन्यमपुरुषा अयस्मयैरग्निपिण्डैः संदंशैस्त्वचि निष्कुषन्ति॥१५॥ यस्त्विह वा अगम्यां स्त्रियमगम्यं वा पुरुषं योषिदभिगच्छति तावमुत्र कशया ताडयन्तस्तिग्मया सूर्म्या लोहमय्या पुरुषमालिङ्गयन्ति स्त्रियं च पुरुषरूपया सूर्म्या ॥ १६ ॥ यस्त्विह वै सर्वाभिगमस्तममुत्र निरये वर्तमानं वज्रकण्टकशाल्मलीमारोप्य निष्कर्षन्ति ॥ १७ ॥ ये त्विह वै राजन्या राजपुरुषा वा अपाखण्डा धर्मसेतून्भिन्दन्ति ते संपरेत्य वैतरण्यां निपतन्ति भिन्नमर्यादास्तस्यां निरयपरिखाभूतायां नद्यां यादोगणैरितस्ततो भक्ष्यमाणा आत्मना न वियुज्यमानाश्चासुभिरुह्यमानाः स्वाघेन कर्मपाकमनुस्मरन्तो विण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवसावाहिन्यामुपतप्यन्ते ॥ १८ ॥

ये त्विह वै वृषलीपतयो नष्टशौचाचारनियमास्त्यक्तलज्जा पशुचर्यां चरन्ति ते चापि प्रेत्य पूयविण्मूत्रश्लेष्ममलापूर्णार्णवे निपतन्ति तदेवातिबीभत्सितमश्नन्ति ॥ १९ ॥ ये त्विह वै श्वगर्दभो मृगयाविहारा अतीर्थे च मृगान्निघ्नन्ति तानपि संपरेताँल्लक्ष्यभूतान्यमपुरुषा इषुभिर्विध्यन्ति ॥ २० ॥ ये त्विह वै दाम्भिका दम्भयज्ञेषु पशून्विशसन्ति तानमुष्मिँल्लोके वैशसे नरके पतितान्निरयपतयोयातयित्वा विशसन्ति ॥२१॥ यस्त्विह वै सवर्णां भार्यां द्विजो रेतः पातयति काममोहितस्तं पापकृतममुत्र रेतः कुल्यायां पातयित्वा रेतःसं पाययन्ति॥२२॥ ये त्विह वै दस्यवोऽग्निदा गरदा ग्रामान्सार्थान्वा विलुम्पन्ति राजानो राजभटा वा तांश्चापि हि परेत्य यमदूता वज्रदंष्ट्राः श्वानः सप्तशतानि विंशतिश्च सरभसं खादन्ति ॥ २३ ॥ यस्त्विह वा अनृतं वदति साक्ष्ये द्रव्यविनिमये दाने वा कथंचित्स वै प्रेत्य नरकेऽवीचिमत्यधःशिरा निरवकाशे योजनशतोच्छ्रायाद्गिरिमूर्ध्नः संपात्यते यत्र जलमिव स्थलमश्मपृष्ठमवभासते तदवीचिमत्तिलशो विशीर्यमाणशरीरो न म्रियमाणः पुनरारोपितो निपतति ॥२४॥ यस्त्विह वै विप्रो राजन्यो वैश्यो वा सोमपीथस्तत्कलत्रं वा सुरां व्रतस्थोऽपि

वा पिबति प्रमादतस्तेषां निरयं नीतानामुरसि पदाक्रम्यास्ये वह्निना द्रवमाणं कार्ष्णायसं निषिञ्चन्ति ॥ २९ ॥ अथ च यस्त्विह वा आत्मसंभावनेन स्वयमधमो जन्मतपोविद्याचारवर्णाश्रमवतो वरीयसो न बहु मन्यते स मृतक एव मृत्वा क्षारकर्दमे निरयेऽवाक्शिरा निपातितो दुरन्ता यातना ह्यश्नुते ॥ ३० ॥ ये त्विह वै पुरुषाः पुरुषमेधेन यजन्ते याश्च स्त्रियो नृपशून्खादन्ति तांश्च ते पशव इव निहता यमसदने यातयन्तो रक्षोगणाः सौनिका इव स्वधितिनाऽवदायासृक् पिबन्ति नृत्यन्ति च गायन्ति च हृष्यमाणा यथेह पुरुषादाः ॥३१॥ ये त्विह वा अनागसोऽरण्ये ग्रामे वा वैश्रम्भकैरुपसृतानुप विश्रम्भय्य जिजीविषून् शूलसूत्रादिषूपप्रोतान्क्रीडनकतया यातयन्ति तेऽपि च प्रेत्य यमयातनासु शूलादिषु प्रोतात्मानः क्षुत्तृड्भ्यां चाभिहताः कङ्कवटादिभिश्चेतस्ततस्तिग्मतुण्डैराहन्यमाना आत्मशमलं स्मरन्ति ॥ ३२ ॥ ये त्विह वै भूतान्युद्वेजयन्ति नरा उल्बण स्वभावा यथा दन्दशूकास्तेऽपि प्रेत्य नरके दन्दशूकाख्ये निपतन्ति यत्र नृपा दन्दशूकाः पञ्चमुखाः सप्तमुखाः उपसृत्य ग्रसन्ति यथा बिलेशयान् ॥ ३३ ॥ ये त्विह वा अन्धावटकुसूलगुहादिषु भूतानि निरु-

न्धन्ति तथामुत्र तेष्वेवोपवेश्य सगरेण वह्निना धूमेन निरुन्धन्ति ॥ ३४ ॥ यस्त्विह वा अतिथीनभ्यागतान्वा गृहेपतिरसकृदुपगतमन्युर्दिधक्षुरिव पापेन चक्षुषा निरीक्षते तस्य चापि निरये पापदृष्टेरक्षिणी वज्रतुण्डा गृध्राः कङ्ककाकवटादयः प्रसह्योरुबलादुत्पाटयन्ति ॥ ३१ ॥ यस्त्विह वा आढ्याभिमतिरहंकृतिस्तिर्यक्प्रेक्षणः सर्वतोऽभिविशङ्की अर्थव्ययनाशचिन्तया परिशुष्यमाणहृदयवदनो निर्वृतिमनवगतो ग्रह इवार्थमभिरक्षति स चापि प्रेत्य तदुत्पादनोत्कर्षणसंरक्षणशमलग्रहः सूचीमुखे नरके निपतति यत्र ह वित्तग्रहं पापपुरुषं धर्मराजपुरुषा वायका इव सर्वतोऽङ्गेषु सूत्रैः परिवयन्ति ॥ ३२ ॥ एवंविधा नरकायमालये सन्ति शतशः सहस्रशस्तेषु च सर्वेषु च सर्व एवाधर्मवर्तिनो ये केचिदिहोदिता अनुदिताश्चावनिपते पर्यायेण विशन्ति तथैव धर्मानुवर्तिन इतरत्र इह तु पुनर्भवे त उभयशेषाभ्यां निविशन्ति ॥ ३३ ॥



# सुबोधपुष्पावली।

केयूराणि न भूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालंकृता मूर्धजाः।
वाण्येका समलंकरोति पुरुषं या संस्कृता धार्यते
क्षीयन्तेऽखिलभूषणानि सततं वाग्भूषणं भूषणम् ॥१॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परा देवता
विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः ॥२॥

क्षान्तिश्चेत्कवचेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां
ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम्।
किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्यानवद्या यदि
व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम्॥३॥

दाक्षिण्यं स्वजने दया परिजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने नयो नृपजने विद्वज्जने चार्जवम्।
शौर्यं शत्रुजने क्षमा गुरुजने कान्ताजने धृष्टता
ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः॥४॥

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्संगतिः कथय किं न करोति पुंसाम् ॥५॥

परिवर्तिनि संसारे मृतः को वा न जायते।
स जातो येन जातेन याति वंशः समुन्नतिम् ॥६॥

यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान्गुणज्ञः।
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ७ ॥

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालना-
द्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात्।
ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रया-
न्मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥८॥

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥९॥

आज्ञा कीर्तिः पालनं ब्राह्मणानां

दानं भोगो मित्रसंरक्षणं च ।
येषामेते षड्गुणा न प्रवृत्ताः
कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥१०॥

यद्धात्रा निजफालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ च नातोऽधिकम् ।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥११॥

अकरुणत्वमकारणविग्रहः
परधने परयोषिति च स्पृहा ।
सुजनबन्धुजनेष्वसहिष्णुता
प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥१२॥

दुर्जन परिहर्तव्यो विद्ययालंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयंकरः ॥१३॥

जाड्यं ह्रीमति गण्यते व्रतशुचौ दम्भः शुचौ कैतवं
शूरे निर्घृणता मुनौ विमतिता दैन्यं प्रियालापिनि ।
तेजस्विन्यवलिप्तता मुखरता वक्तव्यशक्तिस्थिरे
तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नाङ्कितः॥१४॥

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति तीर्थैन किम् ।
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थैन किम् ।
सौजन्यं यदि किं बलेन महिमा यद्यस्ति किं मण्डनैः
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना॥१५॥

मौनान्मूकः प्रवचनपटुर्वाचको जाल्पको वा
दृष्टः पार्श्वे भवति च वसन्दूरतोऽप्यप्रगल्भः ।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥१६॥

आरम्भगुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमुपैति पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना
छायेव मैत्री खलसज्जनानाम् ॥१७॥

मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुना निष्कारणमेव वैरिणो जगति ॥१८॥

वाञ्छा सज्जनसंगतौ परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खलै-
रेते येषु वसन्ति निर्मलगुणास्तेभ्यो महद्भ्यो नमः॥१९॥

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरतिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥२०॥

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम् ।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतं च श्रवणयो-
र्विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥२१॥

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा-
सामान्यं सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः॥२२॥

यः प्रीणयेत्सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ।
तन्मित्रमापदि सुखे च समक्रियं य-
देतत्त्रयं जगति पुण्यकृतो लभन्ते ॥२३॥

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।

अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥२४॥

श्रोत्रं श्रुतेनैव न कुण्डलेन
दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः करुणाकुलानां
परोपकारेण न चन्दनेन ॥२५॥

पापान्निवारयति योजयते हिताय
गुह्यं निगूहति गुणान्प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥२६॥

तृष्णां छिन्द्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ।
मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय प्रश्रयं
कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितम् ॥२७॥

मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून्पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥२८॥

या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ।
तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं
हे साधो व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः॥३८॥

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा खलु संचितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ३९ ॥

मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे
वाणिज्यं कृषिसेवने च सकला विद्याः कलाः शिक्षतु ।
आकाशं विपुलं प्रयातु खगवत्कृत्वा प्रयत्नं परं
नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥४०॥

वने रणे शत्रुजलाग्निमध्ये
महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्तं विषमस्थितं वा
रक्षन्ति पुण्यानि पुराकृतानि ॥४१॥

भीमं वनं भवति यस्य पुरं प्रधानं
सर्वो जनः स्वजनतामुपयाति तस्य ।

कृत्स्ना च भूर्भवति संनिधिरत्नपूर्णा
यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥४२॥

रागस्यागारमेकं नरकशतमहादुःखसंप्राप्तिहेतु-
र्मोहस्योत्पत्तिबीजं जलधरपटलं ज्ञानताराधिपस्य ।
कन्दर्पस्यैकमित्रं प्रकटितविविधस्पष्टदोषप्रबन्धं
लोकेऽस्मिन्न ह्यनर्थव्रजकुलभवनं यौवनादन्यदस्ति ॥४३॥

आवर्तः संशयानामविनयभुवनं पट्टणं साहसानां
दोषाणां संनिधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ।
स्वर्गद्वारस्य विघ्नो नरकपुरमुखं सर्वमायाकरण्डं
स्त्रीयन्त्रं केन सृष्टं विषममृतमयं प्राणिलोकस्य पाशः॥४४॥

विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
शाल्यन्नं सघृतं पयो दधियुतं ये भुञ्जते मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यः प्लवेत्सागरे ॥४५॥

भोगा न भुक्ता वयमेव भुक्ता-
स्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातो वयमेव याता-
स्तृष्णा न जीर्णा वयमेव जीर्णाः ॥४६॥

स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं [1]लेष्मागारं तदपि च शशाङ्केन तुलितम्।
स्रवन्मूत्रक्लिन्नं करिवरशिरःस्पर्धि जघनं
मुहुर्निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम् ॥ ४७ ॥

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं
माने दैन्यभयं बले रिपुभयं रूपे जराया भयम्।
शास्त्रे वादिभयं गुणे खलभयं काये कृतान्ताद्भयं
सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥४८॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम्।
आयुःपरिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ४९ ॥

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुकार्यभारगुरुभिः कालोऽपि न ज्ञायते।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥५०॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥५१॥

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इव परितोषो निर्विशेषो विशेषः।
स तु भवतु दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ ५२ ॥

भक्तिर्भवे मरणजन्मभयं हृदिस्थं
स्नेहो न बन्धुषु न मन्मथजा विकाराः।
संसर्गदोषरहिता विजना वनान्ता
वैराग्यमस्ति किमितः परमर्थनीयम् ॥ ५३ ॥

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः।
मुक्त्वैकं भवदुःखभाररचनाविध्वंसकालानलं
स्वात्मानन्दपदप्रवेशकलनं शेषैर्वणिग्वृत्तिभिः ॥ ५४ ॥

यतो मेरुः श्रीमान्निपतति युगान्ताग्निवलितः
समुद्राः शुष्यन्ति प्रचुरमकरग्राहनिलयाः।
धरा गच्छत्यन्तं धरणिधरपादैरपि धृता
शरीरे का वार्ता करिकलभकर्णाग्रचपले ॥५५॥

गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-
र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते।
वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥५६॥

यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयन्तो महा-
न्संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥५७॥

महेश्वरे वा जगतामधीश्वरे
जनार्दने वा जगदन्तरात्मनि।
न वस्तुभेदप्रतिपत्तिरस्ति मे
तथापि भक्तिस्तरुणेन्दुशेखरे ॥५८॥

# विदुरनीति सार.

आत्मज्ञानं समारंभस्तितिक्षा धर्मनित्यता ।
यमर्थान्नापकर्षंति स वै पंडित उच्यते ॥ १ ॥

निषेवते प्रशस्तानि निंदितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत्पंडितलक्षणम् ॥ २ ॥

क्रोधो हर्षश्च दर्पश्च ह्रीस्तंभो मान्यमानिता ।
यमर्थान्नापकर्षंति स वै पंडित उच्यते ॥ ३ ॥

यस्य कृत्यं न जानंति मंत्रं वा मंत्रितं परे ।
कृतमेवास्य जानंति स वै पंडित उच्यते ॥ ४ ॥

यस्य कृत्यं न विघ्नंति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पंडित उच्यते ॥ ५ ॥

यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्त्तते ।
कामादर्थं वृणीते यः स वै पंडित उच्यते ॥ ६ ॥

यथाशक्ति चिकीर्षंति यथाशक्ति च कुर्वते ।
न किंचिदवमन्यंते नराः पंडितबुद्धयः ॥ ७ ॥

क्षिप्रं विजानाति चिरं शृणोति विज्ञाय चार्थं भजते न कामात्।
नासंपृष्टो व्युपयुंक्ते परार्थे तत्प्रज्ञानं प्रथमं पंडितस्य ॥८॥

नाप्राप्यमभिवांछंति नष्टं नेच्छंति शोचितुम्।
आपत्सु च न मुह्यंति नराः पंडितबुद्धयः ॥ ९ ॥

निश्चित्य यः प्रक्रमते नांतर्वसति कर्मणः।
अवंध्यकालो वश्यात्मा स वै पंडित उच्यते ॥ १० ॥

आर्यकर्मणि रज्यंते भूतिकर्माणि कुर्वते।
हितं च नाभ्यसूयंति पंडिता भरतर्षभ ॥ ११ ॥

न हृष्यत्यात्मसंमाने नावमानेन तप्यते।
गांगो ह्रद इवाक्षोभ्यो यः स पंडित उच्यते ॥ १२ ॥

तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम्।
उपायज्ञो मनुष्याणां नरः पंडित उच्यते ॥ १३ ॥

प्रवृत्तवाक्चित्रकथ ऊहवान् प्रतिभानवान्।
आशु ग्रंथस्य वक्ता च यः स पंडित उच्यते ॥ १४ ॥

श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा।
असंभिन्नार्यमर्यादः पंडिताख्यां लभेत सः ॥ १५ ॥

अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।
अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ १६ ॥

स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्या चरति मित्रार्थे यश्च मूढः स उच्यते ॥ १७ ॥

अकामान्कामयति यः कामयानान्परित्यजेत् ।
बलवंतं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ १८ ॥

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ १९ ॥

संसारयति कृत्यानि सर्वत्र विचिकित्सते ।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥ २० ॥

श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्चति ।
सुहृन्मित्रं न लभते तमाहुर्मूढचेतसम् ॥ २१ ॥

अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
अविश्वस्ते विश्वसति मूढचेता नराधमः ॥ २२ ॥

परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥ २३ ॥

आत्मनो बलमज्ञाय धर्मार्थपरिवर्जितम् ।
अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥ २४ ॥

अशिष्यं शास्ति यो राजन्यश्च शून्यमुपासते ।
कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥ २५ ॥

अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा ।
विचरत्यसमुन्नद्धो यः स पंडित उच्यते ॥२६॥

एकः संपन्नमश्नाति वस्ते वासश्च शोभनम् ॥
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥२७॥

एकः पापानि कुरुते फलं भुंक्ते महाजनः ।
भोक्तारो विप्रमुच्यंते कर्ता दोषेण लिप्यते ॥२८॥

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥२९॥

एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु ।
पंच जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ॥३०॥

एकः स्वादु न भुंजीत एकश्चार्थान्न चिंतयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥३१॥

एकमेवाद्वितीयं तद्यद्राजन्नावबुध्यसे।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥३२॥

क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते।
शांतिखड्ग करे यस्य किं करिष्यति दुर्जनः ॥३३॥

अतृणे पतितो वह्निः स्वयमेवोपशाम्यति।
अक्षमावान्परं दोषैरात्मानं चैव योजयेत् ॥३४॥

द्वावेव न विराजेते विपरीतेन कर्मणा।
गृहस्थश्च निरारंभः कार्यवांश्चैव भिक्षुकः ॥३५॥

द्वावंभसि निवेष्टव्यौ गले बध्वा दृढां शिलाम्।
धनवंतमदातारं दरिद्रं चातपस्विनम् ॥३६॥

पंचेंद्रियस्य मर्त्यस्य छिद्रं चेदेकमिंद्रियम्।
ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥३७॥

षड् दोषा पुरुषेणेह हातव्या भूतिमिच्छता।
निद्रा तंद्री भयं क्रोध आलस्यं दीर्घसूत्रता ॥३८॥

अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च।
वश्यश्च पुत्रोऽर्थकरी च विद्या षड् जीवलोकस्य
सुखानि राजन् ॥३९॥

षडिमानि विनश्यंति मुहूर्तमनवेक्षणात्।
गावः सेवा कृपिर्भार्या विद्या वृपलसंगतिः ॥४०॥

षडेते ह्यवमन्यंते नित्यं पूर्वोपकारिणम्।
आचार्यं शिक्षिताः शिष्याः कृतदाराश्च मातरम् ॥४१॥

नारीं विगतकामास्तु कृतार्थाश्च प्रयोजकम्।
नावं निस्तीर्णकांतारा आतुराश्च चिकित्सकम् ॥४२॥

आरोग्यमानृण्यमविप्रवासः सद्भिर्मनुष्यैः सह संप्रयोगः।
स्वप्रत्ययावृत्तिरभीतवासः षड् जीवलोकस्य सुखानि राजन् ॥४३॥

ईर्ष्यी घृणी न संतुष्टः क्रोधनो नित्यशंकितः।
परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥४४॥

अष्टौ गुणाः पुरुषं दीपयंति प्रज्ञा च कौल्यं च दमः श्रुतं च।
पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च॥४५॥

दश धर्मं न जानंति धृतराष्ट्र निबोध तान्।
मत्तः प्रमत्त उन्मत्तः श्रांतः क्रुद्धो बुभुक्षितः ॥४६॥
त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश।
तस्मादेतेषु सर्वेषु न प्रसज्जेत पंडितः ॥४७॥

प्राप्यापदं न व्यथते कदाचिदुद्योगमन्विच्छति चाप्रमत्तः।
दुःखं च काले सहते महात्मा धुरंधरस्तस्य जिताःसपत्नाः

अनर्थकं विप्रवासं गृहेभ्यः पापैः संधिं परदाराभिमर्शम्।
दंभं स्तैन्यं पैशुनं मद्यपानं न सेवते यश्च सुखी सदैव॥४९॥

देशाचारान्समयाञ्ज्ञातिधर्मान्बुभूषते यः स परावरज्ञः।
स यत्र तत्राभिगतः सदैव महाजनस्याधिपत्यं करोति।५०।

दंभं मोहं मत्सरं पापकृत्यं राजद्विष्टं पैशुनं पूगवैरम्।
मत्तोन्मत्तैर्दुर्जनैश्चापि वादं यःप्रज्ञावान् वर्जयेत्स प्रधानः५१

दानं मोहं दैवतं मंगलानि प्रायश्चित्तान्विविधाँल्लोकवादान्।
एतानि यःकुरुते नैत्यकानि तस्योत्थानं देवता राधयंति५२

समैर्विवाहं कुरुते न हीनैः समैः सख्यं व्यवहारं कथां च।
गुणैर्विशिष्टांश्च पुरो दधाति विपश्चितस्तस्य नयाःसुनीताः५३

विद्यामनो धनमदस्तृतीयोभिजनो मदः।
मदा एतेवलिप्तानामेत एव सतां दमाः॥५४॥

यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम्।
बुद्धिं तस्यापकर्षंति, सोऽवाचीनानि पश्यति॥५५॥

न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संविभजंति तम् ॥५६॥

यथा यथा हि पुरुषः कल्याणे कुरुते मनः ।
तथा तथास्य सर्वार्थाः सिध्यन्ते नात्र संशयः ॥५७॥

नैनं छंदांसि वृजिनात्तारयन्ति मायाविनं मायया वर्तमानम् ।
नीडं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले ।

मद्यपानं कलहं पूगवैरं भार्यापत्योरन्तरं ज्ञातिभेदम् ।
राजद्विष्टं स्त्रीपुंसयोर्विवादं वर्ज्यान्याहुर्यश्च पंथाःप्रदुष्टः। ५९

सामुद्रिकं वणिजं चोरपूर्वं शलाकधूर्तं च चिकित्सकं च ।
अरिं च मित्रं च कुशीलवं च नैतान्साक्ष्ये त्वधिकुर्वीत सप्त

मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः ।
एतानि चत्वार्यभयंकराणि भयं प्रयच्छन्त्ययथाकृतानि ६१

अगारदाही गरदः कुंडाशी सोमविक्रयी ।
पर्वकाराश्च सूची च मित्रध्रुक् पारदारिकः ॥६२॥

भ्रूणहा गुरुतल्पी च यश्च स्यात्पानपो द्विजः ।
अतितीक्ष्णश्च काकश्च नास्तिको वेदनिंदकः ॥६३॥

सुवमग्रहणो व्रात्यः कीनाशश्चात्मवानपि ।
रक्षेत्युक्तश्च यो हिंस्यात् सर्वे ब्रह्महभिः समाः ॥६४॥

जरा रूपं हरति हि धैर्यमाशा मृत्युःप्राणान्धर्मचर्यामसूया।
क्रोधःश्रियं शीलमनार्यसेवान्हियं कामःसर्वमेवाभिमानः६५

अष्टौ गुणाःपुरुषं दीपयन्ति प्रज्ञा च कौल्यं च दमःश्रुतं च।
पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च।६६॥

इज्याध्ययनदानानि तपःसत्यं क्षमा घृणा ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥६७॥

सत्य रूपं श्रुतं विद्या कौल्यं शीलं बलं धनम् ॥
शौर्यं च चित्रभाष्यं च दशेमे स्वर्गयोनयः ॥६८॥

पापं कुर्वन्पापकीर्तिःपापमेवाश्नुते फलम् ।
पुण्यं कुर्वन्पुण्यकीर्तिः पुण्यमत्यंतमश्नुते ॥६९॥

तस्मात्पापं न कुर्वीत पुरुषः शंसितव्रतः ।
पापं प्रज्ञा नाशयति क्रियमाणं पुनःपुनः ॥७०॥

दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत् ।
अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ॥७१॥

पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत्
यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥७२॥

गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥७३॥

ऋषीणां च नदीनां च कुलानां च महात्मनाम् ।
प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ॥७३॥

सुवर्णपुष्पां पृथ्वीं चिन्वंति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥७४॥

नाक्रोशी स्यान्नावमानी परस्य मित्रद्रोही नोत नीचोपसेवी ।
न चाभिमानी न च हीनवृत्तो रूक्षां वाचं रुषतीं वर्जयीत।७५।

मर्माण्यस्थीनि हृदयं तथासून् रूक्षा वाचो निर्दहंतीह पुंसाम्।
तस्माद्वाचमुशतीमुग्ररूपां धर्मारामो नित्यशो वर्जयीत ।७६।

तपो दमो ब्रह्मवित्तं वितानाःपुण्या विवाहाःसततान्नदानम्
येष्वेवैते सप्त गुणा वसन्ति सम्यग्वृत्तास्तानि महाकुलानि॥

अनिज्यया कुविवाहैर्वेदस्योत्सादनेन च ।
कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च ॥७८॥

देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च।
कुलान्यकुलतां यान्ति न्यासापहरणेन च ॥७९॥

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥८०॥

अवध्या ब्राह्मणा गावो ज्ञातयः शिशवः स्त्रियः।
येषां चान्नानि भुञ्जीत ये च स्युः शरणागताः ॥ ८१ ॥

घृणी राजा पुंश्चली राजभृत्यः पुत्रो भ्राता विधवा बालपुत्रा।
सेनाजीवी चोद्धृतभूतिरेव व्यवहारेषु वर्जनीयाः स्युरेते।८२।

गुणा दश स्नानशीलं भजन्ते बलं रूपं स्वरवर्णप्रशुद्धिः।
स्पर्शश्च गन्धश्च विशुद्धता च श्रीःसौकुमार्यं प्रवराश्च नार्यः

अकर्मशीलं च महाशनं च लोकद्विष्टं बहुमायं नृशंसम्।
अदेशकालज्ञमनिष्टवेषमेतान्गृहे न प्रतिवासयेत ॥८४॥

कदर्यमाक्रोशकमश्रुतं च वनौकसं धूर्तममान्यमानिनम्।
निष्ठूरिणं कृतवैरं कृतघ्नमेतान्भृशार्तोऽपि न जातु याचेत्८५

संक्लिष्टकर्माणमतिप्रमादं नित्यानृतं चादृढभक्तिकं च।
विसृष्टरागं पटुमानिनं चाप्येतान्न सेवेत नराधमान्षट् ॥८६॥

उत्पाद्य पुत्राननृणांश्च कृत्वा वृत्तिं च तेभ्योनुविधाय कांचित्।
स्थाने कुमारीः प्रतिपाद्य सर्वा अरण्यसंस्थोऽथ मुनिर्बुभूषेत् ॥ ८७ ॥

स्त्रीषु राजसु सर्पेषु स्वाध्यायप्रभुशत्रुषु ।
भोगेष्वायुषि विश्वासं कः प्राज्ञः कर्तुमर्हति ॥ ८८ ॥

अविक्रेयं लवणं पक्वमन्नं दधि क्षीरं मधु तैलं घृतं च ।
तिला मांसं फलमूलानि शाकं रक्तं वासःसर्वगन्धा गुडाश्च८९

भृत्यैर्वाणिज्यचारं च पुत्रैः सेवेत च द्विजान् ।
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ॥ ९० ॥

तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ।
नित्यं सन्तः कुले जाताः पावकोपमतेजसः ॥ ९१ ॥

यं प्रशंसन्ति कितवा यं प्रशंसन्ति चारणाः ।
यं प्रशंसन्ति बन्धक्यो न स जीवति मानवः ॥ ९२ ॥

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बुद्ध्यवज्ञानमवमानं च भारत ॥ ९३ ॥

प्रियो भवति दानेन प्रियवादेन चापरः ।
मंत्रमूलबलेनान्यो यः प्रियः प्रिय एव सः ॥ ९४ ॥

अकीर्तिं विनयो हन्ति हन्त्यनर्थं पराक्रमः।
हन्ति नित्यं क्षमा क्रोधमाचारो हन्त्यलक्षणम् ॥ ९५ ॥

प्राज्ञोपसेविनं वैद्यं धार्मिकं प्रियदर्शनम्।
मित्रवन्तं सुवाक्यं च सुहृदं परिपालयेत् ॥ ९६ ॥

यत्सुखं सेवमानोऽपि धर्मार्थाभ्यां न हीयते।
कामं तदुपसेवेत न मूढव्रतमाचरेत् ॥ ९७ ॥

दुःखार्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च।
न श्रीर्वसत्यदान्तेषु ये चोत्साहविवर्जिताः ॥ ९८ ॥

तपो बलं तापसानां ब्रह्म ब्रह्मविदां बलम्।
हिंसा बलमसाधूनां क्षमा गुणवतां बलम् ॥ ९९ ॥

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥ १०० ॥

न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः।
सङ्ग्रहेणैष धर्मः स्यात्कामादन्यः प्रवर्तते ॥ १०१ ॥

अक्रोधेन जयेत्क्रोधमसाधुं साधुना जयेत्।
जयेत्कदर्यं दानेन जयेत्सत्येन चानृतम् ॥ १०२ ॥

स्त्रीधूर्तकेऽलसे भीरौ चण्डे पुरुषमानिनि ।
चौरे कृतघ्ने निश्वासो न कार्यो न च नास्तिके ॥१०३॥

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि सम्प्रवर्धन्ते कीर्तिरायुर्यशो वलम् ॥ १०४ ॥

न स्वप्नेन जयेन्निद्रां न कामेन जयेत्स्त्रियः ।
नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ॥ १०५ ॥

अनृते च समुत्कर्षो राजगामि च पैशुनम् ॥
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ १०६ ॥

असूयैकपदं मृत्युरतिवादः श्रियो वधः ॥
अशुश्रूषा त्वरा श्लेषा विद्यायाः शत्रवस्त्रयः ॥ १०७ ॥

आलस्यं मदमोहौ च चापलं गोष्टिरेव च ।
स्तब्धाता चाभिमानित्वं तदात्यागित्वमेव च ॥ १०८ ॥

एते वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः ।
सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम् ॥१०९॥

सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुखम् ॥
इदं च त्वां सर्वपरं ब्रवीमि पुण्यं पदं तात महाविशिष्टम् ।

न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्यापि हेतोः ॥ ११० ॥

नित्यो धर्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः त्यक्त्वा नित्यं प्रतितिष्ठस्व नित्यं सन्तुष्य त्वं तोषपरो हि लाभः ॥ १११ ॥

कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीम् ॥
नावं धृतिमया कृत्वा जन्मदुर्गाणि सन्तर ॥ ११२ ॥

प्रज्ञावृद्धं धर्मवृद्धं स्वबन्धुं विद्यावृद्धं वयसा चापि वृद्धम्। कार्याकार्ये पूजयित्वा प्रसाद्य यः सम्पृच्छेन्न स मुह्येत्कदाचित् ॥ ११३ ॥

धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।
चक्षुःश्रोत्रे च मनसा मनो वाचं च कर्मणा ॥ ११४ ॥

नित्योदकी नित्ययज्ञोपवीति नित्यस्वाध्यायी पतितान्नवर्जी।
सत्यं ब्रुवन्गुरवे कर्म कुर्वन्न ब्राह्मणश्च्यवते ब्रह्मलोकात्॥ ११५॥

# सद्गुरुस्तुतिः।

श्री सद्गुरुं ब्रह्मतनुं नौमी नररूपं ।
यदाश्रिता न पतन्ति भूयो भवकुपं हे ॥ श्री० ॥१॥

गुणाकरं कृष्णपरं सुरासुरैर्वन्द्यं
निगमज्ञं ब्रह्मविदं सद्भिरभिनन्द्यं हे ॥ श्री० ॥२॥

समदृष्टिं निर्विकृतिं निर्गुणतो भिन्नं
परचित्ताभिज्ञमलं विषयैरच्छिन्नं हे ॥ श्री० ॥३॥

बोधकरौ स्वप्नगतैतद्भावि सूचकं
वचनामृतैः शिष्याणामाधि विमोचकं हे॥ श्री० ॥४॥

शुद्धं बुद्धं बोधमयमगुणं निष्कामं
यं जानात्यपि विरल स्वतः आत्मारामं हे॥ श्री० ॥५॥

प्रतारणा परानरा यमनाद्रियन्ते
निपतन्ति ते निरये सुकृताद्धियन्ते हे ॥ श्री० ॥६॥

मूढ दृषां स्वसमानं भातिसनो भाति
कथमर्को घूकदृशोर्दृष्टिपथं याति हे ॥ श्री० ॥७॥